# सानन्दं नृत्यत, कैम्पको गीतं गायत!

"इदं दुग्धपूरितं मण्डसमन्वितं स्वादसंयुक्तं स्वप्नसमृद्धम्
मम प्रियतमं चॉकोलेटम् कैम्पको मण्डयुक्तं दुग्ध-चॉकोलेटम्!"



*" Now be a good boy, Floppy*
*And come for your bath".*



Your child and Floppy
You just can't keep them apart.

# सम्यक् पाठयति सः

| | |
|---|---|
| राधा– किं पाठार्थं गतवती आसीत् भवती? | You seem to be returning from some class? |
| लीला – आं, संस्कृतपाठं समाप्य आगच्छन्ती अस्मि। | Yes, I am coming from the Sanskrit class. |
| रा – कः पाठयति? | Who teaches? |
| ली – अस्मिन् एव मार्गे कश्चित् वित्तकोषाधिकारी अस्ति। सः मम पितृव्यस्य मित्रम्। संस्कृतपाठने तस्य विशेषरुचिः। सम्यक् पाठयति सः। | A bank manager lives on this road. He is a friend of my uncle. He is greatly interested in teaching Sanskrit. He teaches really well. |
| रा – प्रतिमासं कियत् दीयते? | How much do you pay every month? |
| ली – शुल्कं किमपि न स्वीकरोति सः। | He doesn't take any fee. |
| रा – कति च्छात्राः आगच्छन्ति तत्र? | How many of you are there? |
| ली – अस्माकं गणे वयं त्रिंशत् स्मः। सायम् अपि प्रायः एतावन्तः' एव तत्र आगच्छन्ति। रात्रिगणे विंशतिः छात्राः भवन्ति इति श्रूयते। | We are 30 students. There will be about 30 in the evening and I am told there will be another 20 in the night. |
| रा – अहो, बहून् छात्रान् पाठयति खलु सः! किन्तु एकस्मात् अपि शुल्कम् एव न स्वीकरोति इति तु आश्चर्यम्! | Oh, that is quite a number; but it is surprising that he doesn't accept any fee from anybody. |
| ली – कृतस्य अध्ययनस्य सार्थक्यं दानात् एव इति भावयति सः। | He thinks that the knowledge gained by him would have been useful only when it is shared. |
| रा – अहम् अपि आगन्तुं शक्नुयां वा? | May I also join? |
| ली – श्वः मया सह तस्य गृहम् आगच्छतु। अहं भवतीं परिचाययामि। सः अवश्यम् अङ्गीकुर्यात्। | You come along with me tomorrow. I will introduce you to him. He will certainly agree. |





# चन्दमामा

संस्थापकः– 'चक्रपाणिः'　　सञ्चालकः– 'नागिरेड्डी'


## प्रीतिधर्मः

भारतस्य भारतीयानां च दृष्टया १९९३ तमं वर्षम् अत्यन्तमहत्त्वपूर्णम्। स्वामी विवेकानन्दः चिकागोनगरे प्रवृत्ते सर्वधर्मसम्मेलने यत् भाषणं कृतवान्, यस्य भाषणस्य परिणामतः जगत् हिन्दुत्वस्य अध्ययनार्थम् उद्युक्तम् अभवत्, तस्य शततमं स्मारकवर्षम् एतत्।

विवेकानन्दः भाषणस्य आरम्भे न केवलं वेदिकायाम् उपविष्टान् अपि तु महत्यां सभायाम् उपविष्टान् सर्वान् सभासदः आदरेण नमस्कृतवान्। सः तान् सम्बोधितवान् यत् अमेरिकादेशस्य भ्रातरः भगिन्यः च इति। एतत् सम्बोधनवाक्यं सभासत्सु सर्वेषु विद्युत्सञ्चारम् अकरोत्। तेनयत् उक्तं तत् न केवलम् अमेरिकाजनेषु, अपि तु समग्रजगतः सर्वेषु सङ्क्रान्तम् अभवत्।

विवेकानन्दः सभायाम् उपस्थितान् प्रीत्या दृष्टवान्। तैः सह प्रीत्या वार्तालापं कृतवान्। सः तान् बेधितवान् यत् सर्वजातीयाः सर्वदेशीयाः चापि समानाः, तेषु न कोऽपि भेदभावः इति। प्रीतिधर्मं विवृण्वन् पूर्वं सः कदाचित् उक्तवान् आसीत् यत् यदा पञ्चषाः जनाः परस्परं स्नेहेन द्रष्टुम् उद्युक्ताः भवन्ति तदा नूतनस्य धर्मस्य आरम्भः भविष्यति इति।

दक्षिणाफ्रिकादेशे श्वेतजनानां शासनं विरुध्य भारतियमूलान् गान्धिवर्यः यदा प्रेरितवान्, यदा च सः स्वदेशबान्धवान् स्वातन्त्र्यार्थं प्रेरितवान् तदा एषा एव भावना प्रतिध्वनिता अभवत्। भारतीयेषु स्वातन्त्र्यनिमित्तं त्यागभावनां जागरयितुं, धैर्यं नवोत्साहं पूरयितुं च सः भारतम् अखण्डत्वेन, सर्वान् भारतीयान् भ्रातृत्वेन च दृष्टवान्।

स्वातन्त्र्यप्राप्त्यनन्तरं षट्चत्वारिंशद्वर्षाणि, अतीतानि, प्रायः तावन्ति एव वर्षाणि राष्ट्रपितुः गान्धिवर्यस्य दिवङ्गतेः अनन्तरम् अपि अतीतानि। किन्तु वयम् इदानी जनेषु एकताम् आनेतुं मार्गम् अन्विष्यन्तः स्मः।

विवेकानन्दस्य वचनानि अस्माकं कर्णेषु गुञ्जन्ति- "वयं भारतीयाः आक्रमणकारिणः न आस्म। एषः अस्मासु सदा जागर्ति स्म। अतः वयं जीवामः" इति। किन्तु इदानीम् अहम्भावं जेतुम्, परदृष्टया आत्मानं द्रष्टुं च अस्माभिः विजिगीषुभिः भवितव्यम् अस्ति।


सम्पुटः–९　　जनवरी–१९९३　　सञ्चिका–१०

प्रतिकृतिमूल्यं रू. ४-००　*　वार्षिकं ग्राहकशुल्कं रू. ४८-००

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अङ्कः - | Lap | दैन्यम् - | Humbleness |
| अद्यावधि - | Till today | नारङ्गम् - | Orange |
| अवकरः - | Dust | निरभ्रः - | Cloudless |
| अशरीरवाणी - | An Oracle | परशुः - | Axe |
| आधिः - | Mortgage | प्रत्युत - | Instead of |
| आप्रदपीनम् - | An outer garment worn from head to foot | प्रातिवार्षिकः - | Annual |
| | | भञ्जयति - | Breaks |
| आयः - | Income | भीरुता - | Cowardice |
| उत्कर्णः - | To be all ears | मल्लः - | Wrestler |
| उद्बुद्धा - | Arose | मुकुलम् - | A flower-bud |
| उपनेत्रम् - | Spectacles | यौतकम् - | Gifts given to a girl at marriage |
| उपकल्पितवान् - | Arranged | | |
| ऊर्णनाभजालम् - | Cobweb | रजकः - | Washerman |
| कोणः - | Corner | राङ्कवम् - | Shawl |
| खद्योतः - | Firefly | वराटिका - | Cowrie |
| खलः - | Thrashing-floor | वलितम् - | Bent |
| गर्दभः - | Donkey | वातायनम् - | Window |
| गीर्णवती - | Swallowed (F) | व्यामोहः - | Attachment |
| चारित्रिकी - | Historical | शिलीन्ध्रम् - | Mushroom |
| चित्रोष्ट्रः - | Giraffe | सम्भावना - | Possibility |
| छदिः - | Roof | सिक्तम् - | Sprinkled |
| जुगुप्सा - | Disgust | स्थौल्यम् - | Fatness |
| तालः - | Lock | स्रुतम् - | Drained away |

# युरोपीयदेशानां सङ्घटनम्




१९५७ तमे वर्षे केचन युरोपीयदेशाः 'युरोपियन् इकानमिक् कम्यूनिटी' (ई.ई.सी) नाम्ना एकत्रिताः आसन्। एषा संस्था ३५ वर्षेभ्यः 'कामन् मार्केट्' नाम्ना अपि निर्दिश्यते स्म। एतस्य ऐक्यस्य आशयः प्रभावशालितया अभिव्यक्तं भवतु इति उद्देशेन एतत् नाम 'युरोपियन् यूनियन्' इति परिवर्तनीयम् इति प्रयतमानाः सन्ति सदस्याः देशाः। पूर्वम् एतस्मिन् संघे षट् देशाः आसन्। ते च– बेल्जियम्, प्रान्स्, इटली, लक्सेम्बर्ग, नेदर्ल्याण्ड्स्, पश्चिमजर्मनी च। १९७३ तमे वर्षे डेन्मार्क्, ऐर्ल्याण्ड्, ग्रीस्, स्पेन्, पोर्चुगल्, इंग्लेण्ड् च एतस्मिन् आर्थिकसंघे सहभागिनः जाताः।

१९९१ तमे वर्षे डिसेम्बर्मासे एतेषां द्वादशानां देशानां विदेशमन्त्रिणः

नेदर्ल्याण्ड्स्देशस्य मास्ट्रिक्ट्नगरे सम्मिलिताः सन्तः 'युरोपियन् यूनियन् ट्रीटी' नामकस्य प्रस्तावस्य विषये सहमताः जाताः। मासद्वयस्य अनन्तरं तेषां देशानां नायकाः तं प्रस्तावं हस्ताक्षरैः प्रमाणीकृतवन्तः अपि।

एतस्याः घटनायाः काचन चारित्रिकी पृष्ठभूमिका अपि अस्ति। अमेरिका-सोवियत्रशियादेशयोः यत् शीतलयुद्धम् आसीत् तत् सोवियत्संघस्य विच्छेदतः समाप्तम् अभवत्। तदा अमेरिकादेशः 'एकमात्रं सर्वशक्तिशालिनी शक्तिः' (सूपर् पावर्) जातः। यदि एषाः शक्तिः सम्मुखीकरणीया तर्हि समैक्यशक्तिं विना नान्या गतिः इति सम्यक् अवगत्य युरोपीयदेशाः एकत्रिताः जाताः।

एतस्य सन्धेः प्रमुखः अंशः एषः– ''युरोपीयदेशानां मध्ये जनानां गमनागमनार्थं वस्तूनां नयनानयनार्थं च परस्परसीमा-निर्बन्धः न स्यात्। तथैव एतेषां देशानां मध्ये वस्तूनि, सेवा, प्रजाः, मूलधनम् इत्यादीनां यत् आन्तरिकं स्वातन्त्र्यम् अस्ति तस्य विनिमयः स्यात्'' इति। एषः सन्धिः १९९३ तमवर्षस्य जनवरीमासस्य प्रथमे दिनाङ्के क्रियान्वितः भविष्यति। ततः वर्षाभ्यन्तरे 'युरोपीयद्रव्यसंस्था' (युरोपियन् मानिटरी इन्स्टिट्यूट्) निर्मिता भविष्यति। १९९७ तमे वर्षे 'युरोपियन् सेण्ट्रल् ब्यांक्' अपि स्थापयिष्यते। एतस्य शतकस्य समाप्तितः पूर्वं 'संयुक्तयुरोपीयमुद्रा' (Common Eropean Currency) अपि व्यवहारे आगमिष्यति। एतत् 'ट्रीटी' एव शिक्षा, संस्कृतिः, आरोग्यम्, उद्योगः, उपभोक्तृ-सुरक्षा, पर्यावरणम्, परिवहणम्, दूरसञ्चारः इत्यादीनाम् अभिवृद्धेः विषये कार्यं करिष्यति। एतत् एव समानां विदेशाङ्गनीतिम् अपि रूपयिष्यति। युरोपीयपार्लिमेण्ट् अपि भविष्यति। एवम् एषः १९० पृष्ठात्मकः प्रस्तावः 'युनैटेड् स्टेट्स् आफ् युरोप्' कल्पनायाः प्रारूपं निरूपयति।

यदा एषः प्रस्तावः अनुमोदनार्थं (रैटिफिकेशन्) प्रेषितः तदा डेन्मार्क्देशेन एषः निराकृतः। ग्रीक्सर्वकारेण तु बहुजनसम्मत्या एषः प्रस्तावः अङ्गीकृतः। फ्रान्स्देशेन ५१% सम्मतिः सूचिता। लक्सेम्बर्ग्-नेदर्ल्याण्ड्देशौ एतं प्रस्तावं पूर्णतः समर्थितवन्तौ। एतस्य वर्षस्य समाप्तितः पूर्वम् इतरे सप्त देशाः एतद्विषये स्वनिर्णयं सूचयेयुः इति निरीक्ष्यते।

**आष्ट्रेलियादेशः पृथक्कृतः चेत् युरोपखण्डः अल्पः द्वीपः भविष्यति। भौगोलिकरूपेण तु एषः एशिया-महाद्वीपखण्डेन युक्तः अस्ति। एतयोः द्वीपयोः वैशिष्ट्यम् असीरियन्जनाः ऐदम्प्राथम्येन एवं निरूपितवन्तः यत् एशियाखण्डः 'उदयमानः सूर्यः', युरोपखण्डः 'अस्तं गच्छन् सूर्यः' इति।**



# श्रमजीवनम्

कस्मिंश्चित् ग्रामे पूर्वं शिवः नाम कश्चित् आसीत्। यदा सः पञ्चवर्षीयः आसीत् तदा तस्य मातापितरौ दिवंगतौ आस्ताम्। अनाथः सः जनाः यत् यच्छन्ति तत् खादन् दिनानि यापयति स्म। तस्य दयनीयां दशां दृष्ट्वा खिन्नः राघवः नाम गृहस्थः तं स्वगृहम् आनीय पोषितवान्।

विद्याभ्यासे अल्पाम् अपि आसक्तिं न प्रदर्शितवान् शिवः। अलसः सन् एव सः प्रवृद्धः। एवम् एव षोडशवर्षीयः तरुणः अपि जातः सः।

कदाचित् राघवः शिवम् आहूय उक्तवान्– "वत्स! भवान् अलसः जातः यत् तस्य कारणम् अहम् एव इति जनाः वदन्ति, मां निन्दन्ति च। अहं तु वृद्धः जातः। इतः परं यदि भवान् किमपि कार्यं न कुर्यात् तर्हि मम पुत्राः भवते गृहे भोजनादिकं न दद्युः। अतः भवान् प्रतिदिनम् उद्यानसस्यानि जलेन सिञ्चतु। आलस्यं मृत्युसमम्। कार्येण एव शरीरशक्तिः वर्धते" इति।

राघवेण विशालम् उद्यानं निर्मितम् आसीत्। सर्वत्र जलसेचनं करणीयं चेत् घण्टाद्वयं परिश्रमः करणीयः आसीत्।

एतावन्तं श्रमं कर्तुं न इच्छति शिवः। 'यदि उद्यानं जलेन सिक्तं स्यात् तर्हि एव भवते भोजनादिकं दीयते' इति सूचितवान् आसीत् राघवः। 'यदि विना श्रमं केनापि उपायेन उद्यानं जलेन सिक्तं स्यात् तर्हि वरं भवेत्' इति शिवस्य विचारः। 'तादृशम् उपायं सूचयितुं यः शक्नोति तादृशः अन्वेष्टव्यः' इति निश्चित्य गृहात् निर्गतवान् शिवः।

ग्रामात् बहिः स्थिते पर्वते काचित् गुहा आसीत्। तस्यां कश्चन संन्यासी वसति स्म। 'संन्यासिनः प्रायः विशिष्टशक्तिशालिनः

"भामहः"



भवन्ति' इति निश्चित्य शिवः संन्यासिनः समीपं गत्वा स्वस्य कष्टं निवेदितवान्।

शिवस्य कथनं समग्रं श्रुत्वा संन्यासी उक्तवान्– "वृष्टिः आगता चेत् अस्माकं श्रमं विना अपि उद्यानम् आर्द्रं भवितुम् अर्हति। अस्माकम् अपेक्षा यदा भवति तदा वृष्टिः इष्यते चेत् भवता ईशान्यदिशि स्थितम् अरण्यं गन्तव्यम्। तत्र स्थितस्य वटवृक्षस्य अधः अधोमुखं लम्बनं कृत्वा षण्मासान् यावत् वरुणम् उद्दिश्य तपः आचरणीयम्। तदा भवान् अपूर्वां सिद्धिं प्राप्स्यति। मेघाः च भवदपेक्षानुगुणं वर्षन्ति" इति।

शिवः ईशान्यदिशि स्थितम् अरण्यं गतवान्। तत्र कस्यचित् वटवृक्षस्य अधः अधोमुखं लम्बमानः कश्चन पुरुषः तेन दृष्टः।शिवः तस्य समीपं गत्वा विनयेन नमस्कृत्य– "श्रीमन्! अहम् अपि अत्र भवान् इवं अधोमुखं लम्बनं करोमि। आवाम् उभौ अपि तपसः सिद्धिं प्राप्नुयाव" इति उक्तवान्।

तदा सः पुरुषः कोपेन– "तपः? एतत् तु मम दौर्भाग्यस्य फलम्। केचन माम् एवम् अधोमुखं बद्धवन्तः सन्ति। प्रथमं भवान् मां बन्धविमुक्तं करोतु। ततः वार्तालापः। असह्या वेदना एषा। पिपासादयः मां नितरां बाधन्ते" इति उक्तवान्।

शिवः तस्य बन्धम् अपनीय तस्मै जलादिकं दत्तवान्। किञ्चित्कालानन्तरं चैतन्यं प्राप्य सः पुरुषः आत्मनः परिचयम् उक्तवान्। सः कश्चन चोरः आसीत्।

तं चोरं ज्ञात्वा उक्तवान् शिवः– "भोः, चौर्यं तु कष्टकरं खलु? तदपेक्षया षण्मासान् तपः कृत्वा सिद्धिः प्राप्ता चेदेव वरं खलु? सिद्धिः प्राप्ता चेत् यत्किमपि साधयितुं शक्यते" इति।

"मूर्ख! एकघण्टां यावत् अधोमुखं लम्बने एव अहं महत् कष्टम् अनुभूतवान्। एवं स्थिते षण्मासान् यावत् तथा स्थातुं कथं शक्येत? भ्रान्तिः भवतः। मया तु तथा स्थातुं सर्वथा न शक्यते" इति उक्तवान् चोरः।

शिवः मौनं चिन्तयन् स्थितवान्। तदा

चोरः पुनः उक्तवान्– "यदि भवता तपः एव क्रियेत तर्हि भवन्तम् उत्तोल्य इतः निर्गमिष्यामि। अन्यथा भवान् मया सह आगच्छतु। चौर्यं पाठयामि भवन्तम्। साहाय्यकः अस्ति चेत् ममापि सन्तोषः। परस्परपूरकौ सन्तौ आवां चौर्यं करवाव" इति।

एषः प्रस्तावः शिवाय अरोचत। सः सन्तोषेण चोरेण सह प्रस्थितवान्।

रात्रौ स्नानं कर्तुम् आदिष्टवान् चोरः। स्नानानन्तरं समग्रं शरीरं तैलेन लेपितवन्तौ तौ। कृष्णवर्णस्य अपि लेपनं कृतम्। ततः उभौ अपि चौर्यार्थं प्रस्थितवन्तौ।

मार्गे गमनसमये एकम् उत्तमं भवनं दृष्टवन्तौ तौ। "अद्य अत्रैव चौर्यं करवाव। गृहे प्रभूतं धनं तु स्यात् एव" इति सूचितवान् शिवः।

चोरः एतत् निराकुर्वन्– "एतादृशेषु गृहेषु रक्षकाः, शुनकाः च भवन्ति। अतः अत्र चौर्यं कष्टकरम्। सामान्यगृहेषु चौर्यम् एव क्षेमकरम्" इति सूचितवान्।

अनन्तरं तौ सामान्ये कस्मिंश्चित् गृहे चौर्यं कृतवन्तौ। चौर्येण द्विशतं रूप्यकाणि प्राप्तानि। तदा शिवः उक्तवान्– "एतत् धनं विभज्य स्वीकृतं चेत् मासं यावत् परिश्रमः करणीयः नास्ति" इति।

एतत् वचनम् अपि निराकुर्वन् चोरः उक्तवान्– "कस्मिन् गृहे रक्षकाः सन्ति,



कस्मिन् न इति सूचयितुं कश्चित् अस्ति। तस्मै पञ्चाशत् रूप्यकाणि दातव्यानि। एतस्य मार्गस्य रक्षकः राजभटः आवां दृष्ट्वा अपि अदृष्टवान् इव स्थितवान्। अतः तस्मै पञ्चाशत् रूप्यकाणि दातव्यानि। चौर्यार्थम् अनुमतिं दत्तवते चोरनायकाय अपि पञ्चाशत् रूप्यकाणि दातव्यानि। अवशिष्टे धने आवाम् अर्धार्धं स्वीकरवाव। एवं प्राप्ते धने दश रूप्यकाणि देव्यै अर्पणीयानि। अतः अद्यतनः एकैकस्य आयः केवलं पञ्चदश रूप्यकाणि" इति।

तदनुगुणं पञ्चदश रूप्यकाणि प्राप्य गृहं गतवान् शिवः। गमनसमये मार्गे तस्य मनसि विचारः आगतः– 'चौर्यसमये महान्



परिश्रमः करणीयः। ग्रहणभीतिः तु अस्ति एव। एतावदेव न, कृष्णवर्णस्य तैलस्य च अपनयनार्थं प्रतिदिनं श्रमः अपि करणीयः। एतदपेक्षया भटोद्योगः एव वरम्। प्रतिदिनं ग्रामे इतस्ततः सञ्चारः। चोराः उत्कोचरूपेण यत् यच्छन्ति तत् प्राप्य सुखेन जीवितुं शक्यते' इति।

अतः सः अनन्तरदिने राजभटस्य समीपं गत्वा प्रार्थितवान् यत् मह्यम् अपि भटोद्योगं दापयतु इति।

तदा सः राजभटः उक्तवान्- "अहं उत्कोचस्वीकरणपूर्वकं सुखेन जीवामि इति भवान् चिन्तयति। किन्तु मया प्रतिदिनं भटप्रमुखस्य गृहे कार्याणि करणीयानि भवन्ति। धिक् मम भटजीवनम्। भवते धनम् आवश्यकं चेत् भवान् प्रतिदिनं भटप्रमुखस्य गृहे कार्याणि करोतु। अहं भवते प्रतिमासं द्विशतं रूप्यकाणि दास्यामि" इति।

"अहो, परिश्रमः मम प्रियः न। यदि अहं भटप्रमुखः भवेयं तर्हि प्रायः सुखेन जीवेयम्। अतः भटप्रमुखत्वं प्राप्तव्यं चेत् मया किं वा करणीयम्? वदतु" इति उक्तवान् शिवः।

"भटप्रमुखत्वं प्राप्तव्यं चेत् चन्द्रनाथनामकात् शिक्षकात् योग्यं शिक्षणं प्राप्तव्यम्। अतः भवान् चन्द्रनाथं पश्यतु" इति सूचितवान् राजभटः।

शिवः चन्द्रनाथसमीपं गतवान्। चन्द्रनाथस्य बहवः शिष्याः आसन्। सः शिवस्य अपेक्षां श्रुत्वा उक्तवान्- "भटनायकत्वं प्राप्तव्यं चेत् चोरग्रहणकौशलं प्रथमं सम्पादनीयम्। तदर्थं दृढं शरीरं, धैर्यं, चातुर्यं च भवतः भवेत्। मम सकाशात् भवान् वर्षद्वयं यावत् विद्याभ्यासं करोति चेत् भवान् भटनायकपदं तत्सदृशम् अन्यत् पदं वा प्राप्तुं योग्यः भविष्यति। परिश्रमेण विद्याभ्यासं कर्तुं सिद्धः वा भवान्?" इति।

"परिश्रमं कर्तुं न इच्छति मम मनः। अतः भवतः शिष्यत्वं मास्तु मम। भवान् इव शिक्षकः यदि अहं भवेयं तर्हि समीचीनं स्यात्। अतः शिक्षकपदं प्राप्तुं किं करणीयं मया?" इति पृष्टवान् शिवः।

"शिक्षकपदं प्राप्तव्यं चेत् चत्वारि वर्षाणि यावत् सततपरिश्रमः करणीयः। परीक्षासु उत्तीर्णता प्राप्तव्या। एतत् कर्तुं शक्नुयात् वा भवान्?" इति पृष्टवान् चन्द्रनाथः।

शिवः क्षणकालं चिन्तयित्वा चन्द्रनाथं विनयेन नमस्कृत्य– "श्रीमन्! भवता बहु ज्ञानं सम्पादितं खलु? विना श्रमं धनसम्पादनस्य कमपि उपायं सूचयतु कृपया" इति प्रार्थितवान्।

तदा चन्द्रनाथः उक्तवान्– "विना श्रमं किमपि कार्यं न सिद्ध्यति। तथापि एकं मार्गं सूचयामि। तत्र प्रयत्नं कृत्वा पश्यतु। एतस्मिन् ग्रामे देवनाथः नाम कश्चित् धनिकः अस्ति। प्रतिदिनं प्रातः सायं च घण्टाद्वयं यावत् सः कथां शृणोति। यः प्रातः सायं च कथां श्रावयति तस्मै प्रतिदिनं पञ्च रूप्यकाणि ददाति सः। अतः भवान् तं पश्यतु" इति।

शिवः देवनाथं दृष्ट्वा– "कथाकथनार्थम् अहम् आगतः अस्मि" इति उक्तवान्।

देवनाथः नितरां स्थूलः। धान्यगोणी इव सः मञ्चे पतितः आसीत्। शिवेन उक्ताः कथाः तस्मै अरोचन्त। शिवाय अपि एषः उद्योगः अरोचत।

कदाचित् शिवः देवनाथम् उक्तवान्– "मया अपेक्षितः अवकाशः इदानीं प्राप्तः अस्ति। अतः अहम् आजीवनम् अत्रैव तिष्ठामि" इति।



तदा देवनाथः खेदमिश्रितं हसन्– "भवता उच्यमानाः कथाः मह्यं रोचन्ते इति तु सत्यम्। किन्तु एषा कथाकथनप्रक्रिया दीर्घकालं न प्रचलेत्" इति उक्तवान्।

एतत् श्रुत्वा भीतः शिवः पृष्टवान्– "किं श्रीमन्! भवतः समीपे विद्यमानं धनं समाप्तप्रायं वा?" इति।

"धनं न समाप्तप्रायम्। मम पुत्र-पौत्र-प्रपौत्रादयः अपि सुखेन जीवितुं यावत् आवश्यकं तावत् धनम् अस्ति मम समीपे। किन्तु मम समस्या अन्या। अहं बाल्यतः अपि अलसः आसम्। यथारुचि आहारं खादामि स्म। तस्य परिणामतः एतत् स्थौल्यं प्राप्तं मया। स्थौल्यकारणतः बहवः रोगाः अपि

सन्ति मम शरीरे। यावत् स्थौल्यं न अपगच्छति तावत् औषधेन किमपि प्रयोजनं न भवति इति उक्तवन्तः सन्ति वैद्याः। स्थौल्यनिवारणार्थम् अहम् अल्पं द्रवाहारं स्वीकुर्वन् अस्मि। बुभुक्षा यथा विस्मृता भवेत् तथा कर्तुं प्रातः सायं च कथां शृण्वन् अस्मि। यदि स्थौल्यं किञ्चित्त् न्यूनं स्यात् तर्हि वैद्यः अन्यविधचिकित्सायाः आरम्भं करिष्यति। तदा भवतः कथायाः आवश्यकता मम न भवति" इति उक्तवान् देवनाथः।

"अन्या चिकित्सा का सा?" इति कुतूहलेन पृष्टवान् शिवः।

"इदानीम् अहं चलितुम् एव न शक्नोमि। अतः मिताहारचिकित्सा प्रचलति। यदा मम भारः किञ्चित् न्यूनः भवति, अहं चलितुं शक्तः भविष्यामि। तदा प्रातः सायं च उद्यानसस्यानि जलेन सेक्तव्यानि इति वैद्येन सूचितम् अस्ति। जलसेचनम् एव योग्या चिकित्सा इति वैद्यस्य आशयः। अन्या काऽपि चिकित्सा न आवश्यकी इति वदति सः" इति उक्तवान् देवनाथः।

"दिने द्विवारं जलसेचनं वा? श्रमजनकं कार्यं खलु तत्?" इति आश्चर्येण उक्तवान् शिवः।

"स्यात् नाम। बाल्यतः अपि श्रमात् भीतः अहं स्वस्य आरोग्यनाशस्य कारणं स्वयं जातः। एतदपेक्षया श्रमेण कार्यं कृत्वा आरोग्यस्य रक्षणम् एव वरं खलु?" इति उक्तवान् देवनाथः।

एतस्य वचनस्य श्रवणेन, देवनाथस्य जीवनस्य दर्शनेन च शिवः विवेकं प्राप्तवान्। श्रमस्य अकरणं जीवनं नाशयति इति सम्यक् अवगतवान् सः।

पुनः कानिचन दिनानि देवनाथस्य साहाय्यं कृत्वा गृहं गतवान् सः। कार्येषु विशेषासक्तिं प्रदर्शितवान् अपि। राघवः यद्यत् कार्यं वदति तत्सर्वं श्रद्धया करोति स्म सः।

शिवे जातं परिवर्तनं दृष्ट्वा नितरां सन्तुष्टः अभवत् राघवः। शिवः च परिश्रमेण कार्यं कुर्वन् सुखेन जीवितवान्।






# माया-भवनम्

८

(युवराज्ञीं विद्यावतीम् अन्विष्यन् महेन्द्रनाथः अरण्यं प्रविष्टवान्। तत्र कश्चन संन्यासी मिलितः। सः महेन्द्रनाथाय एकम् अपूर्वम् अङ्गुलीयकं दत्तवान्। ततः अग्रे गतः महेन्द्रनाथः पर्वतस्य उपरि स्थितम् अपूर्वं भवनं दृष्टवान्। भवनस्य रक्षकः महेन्द्रनाथाय एकां रात्रिं तत्र यापयितुम् अवकाशं दत्तवान्। तदनन्तरम्....)

तस्यां रात्रौ महेन्द्रनाथस्य मनसि विविधाः विचाराः। तन्मध्ये सः संन्यासिना दत्तम् अङ्गुलीयकं स्मृतवान्। अन्येन हस्तेन तत् अङ्गुलीयकं स्पृष्टवान् सः। मध्यरात्रसमये कदाचित् तेन निद्रा प्राप्ता। सूर्योदयात् पूर्वं तेन जागरणं प्राप्तम्। भवने जनानां सञ्चारः दृश्यते स्म। तावता द्वारपालकः आहारम् आनीय प्रकोष्ठे स्थापितवान्। प्रातर्विधिं समाप्य मुखादिकं प्रक्षाल्य द्वारपालकेन सह उपविश्य उपाहारं स्वीकृतवान् महेन्द्रनाथः। उपाहारस्य अनन्तरं हस्तं क्षालयन् द्वारपालकं पृष्टवान् सः– "भवतः स्वामी आगतः अस्ति खलु?" इति।

द्वारपाकः आश्चर्येण तं पृष्टवान्– "भवान् एतत् कथं ज्ञातवान्?" इति।

तदा महेन्द्रनाथः उक्तवान्- "रात्रौ



बहुकालं यावत् मम निद्रा न आसीत्। तदा द्वारशृङ्खलाशब्दः श्रुतः। इदानीं सर्वत्र सेवकादीनां सञ्चारः विशेषतः दृश्यते। एतत् सर्वं दृष्टं चेत् यः कोऽपि ऊहां कुर्यात् यत् भवतः स्वामी उपस्थितः इति। मम वचनं सत्यं खलु?'' इति।

अङ्गीकारपूर्वकं शिरः चालितवान् द्वारपालकः। तदा महेन्द्रनाथः पुनः तम् उक्तवान्– ''इदानीं मम अत्र स्थितिः भवतः क्लेशाय भवेत्। अतः इतः मम निर्गमनं वरम् इति भावयामि अहम्'' इति।

''स्वामी आगतः इति तु सत्यम्। किन्तु सः एतस्यां दिशि प्रायः न आगच्छति। अतः भीतेः नास्ति अवकाशः। भवान् आवश्यकं चेत् द्वित्राणि दिनानि यावत् अत्र स्थित्वा विश्रान्तिसुखम् अनुभवतु। तदभ्यन्तरे अहम् अपि स्वामिनं पृष्ट्वा भवते अत्र कमपि उद्योगं दापयितुं प्रयत्नं करिष्यामि'' इति उक्तवान् द्वारपालकः।

''भवतः उपकारबुद्धिः नितरां प्रशंसार्हा। भवतः स्वामी यदि मह्यं उद्योगं कमपि दद्यात् तर्हि अहम् अत्र तिष्ठेयम्। अन्यथा अहं श्वः एव इतः निर्गमिष्यामि। मत्कारणतः वृथा भवतः क्लेशः न भवेत् इति मम आशयः'' इति उक्तवान् महेन्द्रनाथः।

''भवान् निश्चिन्तः तिष्ठतु अत्र। अहं योग्यं सन्दर्भं दृष्ट्वा भवतः उद्योगस्य विषयं स्वामिनः पुरतः उपस्थापयिष्यामि। उद्योगः कोऽपि यथा प्राप्येत तथा करिष्यामि। मयि विश्वासं स्थापयित्वा निश्चिन्ततया तिष्ठतु भवान्'' इति उक्त्वा द्वारपालकः ततः निर्गतवान्।

महेन्द्रनाथः तस्य प्रकोष्ठस्य वातायनस्य पार्श्वे उपविश्य बहिः दृष्टिं प्रसारितवान्। मौनम् उपविशतः तस्य मनसि कश्चन विचारः आगतः। 'अत्र सेवकाः उत्साहेन स्वकार्येषु मग्नाः दृश्यन्ते। यदि अहम् एतेषु अन्यतमः इव अभिनयन् बहिः गच्छेयं तर्हि सर्वं विनायासं परिशीलयितुं शक्येत। द्वारपालकवचने प्रस्तुता सा नूतना महिला का इत्यपि ज्ञातुं शक्येत। साहसे श्रीः प्रतिवसति। साहसकार्यं कृतं चेदेव जयः प्राप्यते।' एवम्

आलोच्य महेन्द्रनाथः एकेन वस्त्रेण शिरः आवेष्ट्य मौनं ततः निर्गतवान्, सेवकेषु सम्मिलितः अभवत् च।

सर्वे सेवकाः स्वकार्येषु मग्नाः दृश्यन्ते स्म। केचन उद्याने सुन्दरमूर्तीनाम् स्वच्छतायाम् अलङ्करणे च मग्नाः आसन्। अन्ये केचन सस्यानि जलेन सिञ्चन्तः आसन्। अन्ये केचन गुल्मादीनां कर्तने मग्नाः दृश्यन्ते स्म। पुनः केचन द्वार-वातायनादीनि पुनः पुनः मार्जयन्तः शोभावर्धने निरताः आसन्। तेषु कस्यापि दृष्टिः महेन्द्रनाथस्य उपरि न पतिता। महेन्द्रनाथः वातायनानि द्वाराणि च स्वच्छीकुर्वन् सहजगत्या एव भवनस्य अन्तः गतवान्। भवने बहवः प्रकोष्ठाः आसन्। किन्तु सर्वे स्वच्छाः सुन्दराः च आसन्। केचन प्रकोष्ठाः पिहिताः आसन्। महेन्द्रनाथः वातायनद्वारा तेषाम् अन्तः दृष्टिं प्रसारितवान्। प्रकोष्ठस्य अन्तः समग्रभित्तौ काचकानि योजितानि दृष्टानि तेन।

महेन्द्रनाथः किञ्चित्कालं यावत् एवं प्रकोष्ठानां परिशीलनं कृतवान्। ततः अग्रे गमनार्थं कश्चन मार्गः दृष्टः। महेन्द्रनाथः तं मार्गम् अनुसृतवान्। पुनः एकः प्रकोष्ठः तेन तत्र दृष्टः। प्रकोष्ठस्य द्वारं किञ्चिदिव उद्घाटितः आसीत्। द्वारं सम्यक् उद्घाट्य अन्तः गतवान् महेन्द्रनाथः। तस्मिन् प्रकोष्ठे अपि भित्तौ सर्वत्र काचकानि योजितानि आसन्। एकत्र सुन्दरी देवीप्रतिमा दृष्टा। प्रतिमायाः पुरतः कौशेयवस्त्रनिर्मितः कटः प्रसारितः आसीत्। तदुपरि त्रयः वृद्धाः





विनयेन उक्त्वा एकं पदं पृष्ठतः स्थापितवान्।

"एषः प्रकोष्ठः स्वच्छः एव अस्ति। स्वच्छीकरणस्य काऽपि आवश्यकता नास्ति। भवान् गच्छतु इतः" इति उक्तवान् सः वृद्धपण्डितः।

"यथाज्ञापयति श्रीमन्!" इति विनयेन उक्त्वा द्विवारं तं नमस्कृत्य परिवृत्य ततः निर्गतवान् महेन्द्रनाथः।

महेन्द्रनाथः अचिरात् एव द्वारपालकस्य प्रकोष्ठं प्रत्यागतवान्। अल्पे एव काले द्वारपालकः तत्र आगतः। सः महेन्द्रनाथं पृष्टवान्– "भवता सम्यक् विश्रान्तिसुखम् अनुभूतं खलु?" इति।

"आम्। सेवकाः कार्यार्थम् इतस्ततः सञ्चरन्तः आसन्। तेषां गमनागमनं पश्यन् उपविष्टवान् आसम्। कथं समयः गतः इत्येव न ज्ञातम्। तदस्तु, भवान् स्वामिनं दृष्टवान् वा?" इति पृष्टवान् महेन्द्रनाथः।

"एतत्सन्दर्भे अस्माकं स्वामी एकाकितया न आगतः। तेन सह द्वित्राः वृद्धपण्डिताः अपि आगताः सन्ति। प्रायः ते ज्योतिषिकाः स्युः। तैः सह उपाहारं स्वीकृत्य अस्माकं स्वामी विश्रान्त्यर्थं स्वप्रकोष्ठं गतः अस्ति। अतः तेन मेलितुम् अवकाशः न प्राप्तः। सायं सः प्रायः उद्यानम् आगच्छति। तत्समये प्रायः वार्तालापः कर्तुं शक्येत" इति उक्तवान् द्वारपालकः। ततः सः शय्यां प्रसार्य निद्रां

उपविष्टाः आसन्। त्रयाणाम् अपि वस्त्र धूम्रवर्णोपेतम् आसीत्। तयोः अन्यतरौ ताडग्रन्थस्य कस्यचित् परिशीलने मग्नौ आस्ताम्। अपरः भूमौ चित्रितस्य चित्रस्य रेखाणां परिशीलने निरतः आसीत्।

द्वारम् उद्घाट्य महेन्द्रनाथः अन्तः यदा आगतः तदा कस्यचित् पण्डितस्य दृष्टिः तस्य उपरि पतिता। सः महेन्द्रनाथं पृष्टवान्– "अये, कः भवान्? किमर्थम् अत्र आगतवान्?" इति।

"प्रकोष्ठस्य स्वच्छीकरणार्थम् आगतः अस्मि श्रीमन्! यदि भवतां कार्ये विघ्नः जातः स्यात् तर्हि अहं क्षन्तव्यः। अनन्तरम् आगत्य स्वच्छतां करिष्यामि" इति महेन्द्रनाथः महता



कृतवान्।

महेन्द्रनाथः वातायनस्य पार्श्वे उपविश्य बहिः पश्यन् समयं यापितवान्। सूर्यास्तात् किञ्चित् पूर्वं कश्चन पुरुषः उद्यानं प्रति आगच्छन् तेन दृष्टः। सः आप्रपदीनं युतकं धृतवान् आसीत्। तस्य केशाः सुदीर्घाः आसन्। किन्तु श्मश्रु अल्पम् आसीत्। गम्भीरा आकृतिः तस्य। मुखे पदनिक्षेपे च राजसभावः दृश्यते स्म। 'एषः एव एतस्य प्रदेशस्य स्वामी' इति ज्ञातवान् महेन्द्रनाथः। सः स्वामी द्वित्रवारं द्वारपालकस्य प्रकोष्टं दृष्टवान् आसीत्। अतः महेन्द्रनाथः झटिति गत्वा सुप्तवन्तं द्वारपालकम् उत्थाप्य उक्तवान्– "मित्र! भवतः स्वामी उद्यानं प्रति आगतः अस्ति। सः भवतः प्रतीक्षां कुर्वन् अस्ति इति भाति" इति।

द्वारपालकः झटिति उत्थाय वातायनात् बहिः दृष्ट्वा– "आम्, सः एव अस्माकं स्वामी। सः भवन्तं तु न दृष्टवान् स्यात् खलु?" इति पृष्टवान्।

"न। यतः अहं प्रकोष्ठात् बहिः न गतः एव" इति उक्तवान् महेन्द्रनाथः।

द्वारपालकः त्वरया स्ववेषं धृत्वा प्रकोष्ठात् निर्गतवान्। उद्यानं गत्वा स्वामिनं विनयेन नमस्कृतवान् च। किञ्चित्कालं यावत् स्वामी द्वारपालकः च वार्तालापं कृतवन्तौ। महेन्द्रनाथः वातायनद्वारा तौ पश्यन् आसीत्। स्वामी भवनस्य एकं भागं हस्तसङ्केतेन सूचयन् द्वारपालकं किमपि उक्तवान्। द्वारपालकः विनयेन अवनम्य स्वामिनं नमस्कृत्य द्वित्राणि पदानि पृष्ठतः स्थापितवान्। स्वामी भवनं प्रविष्टवान्।

यदा अन्धकारः सर्वत्र प्रसृतः तदा द्वारपालकः प्रकोष्ठं प्रत्यागतः। सः महेन्द्रनाथं दृष्ट्वा मन्दहासपूर्वकं– "मित्र! सन्तोषकरी वार्ता आनीता मया। एतस्य भवनस्य अपरपार्श्वे स्थितस्य द्वारस्य रक्षकं परिवर्तयितुम् इच्छति अस्माकं स्वामी। तस्मिन् भागे केवलं महिलाः निवसन्ति। यदि तत्र रक्षणकार्यं भवते रोचेत तर्हि ...." इति यावत् उक्तवान् तावता महेन्द्रनाथः सन्तोषातिशयं प्रदर्शयन् उक्तवान्–

"श्रीमन्! तत् कार्यं मम अनुमतम् एव। एतत्क्षणे एव अहं कार्यार्थं सिद्धः अस्मि" इति।

"एवं तर्हि मया सह आगच्छतु तावत्। भवन्तं तत् स्थलं प्रापयामि। एषु दिनेषु तस्य द्वारस्य उद्घाटनं विरलम्। सदा तत् द्वारं कीलितम् एव तिष्ठति" इति उक्त्वा द्वारपालकः दीपं ज्वालयित्वा अग्रे प्रस्थितवान्। महेन्द्रनाथः विना वचनं तम् अनुसृतवान्।

उभौ अपि किञ्चिद्दूरं गतवन्तौ। ततः सोपानमार्गः प्राप्तः। तानि सोपानानि अवतरन्तौ तौ अग्रे गतवन्तौ। किञ्चिद्दूरं गमनानन्तरं शृङ्खलया बद्धं लोहनिर्मितं द्वारं प्राप्तम्। भवनस्य आकारः अस्पष्टतया दृश्यते स्म।

द्वारपालकः महेन्द्रनाथम् उक्तवान्— "अत्र भवतः विशेषकार्यं किमपि न भवति। समये समये आहारम् अहम् आनीय दास्यामि। प्रातः अहं यदा अत्र आगच्छामि तदा भवान् मम प्रकोष्ठं गत्वा शयनं कर्तुम् अर्हति। किन्तु अत्र सदा जागरूकतया स्थातव्यम्। एषः दीपः अत्रैव भवतु तावत्" इति। ततः सः निर्गतवान् च।

ततः घण्टाद्वयस्य अनन्तरं द्वारपालकः भोजनम् आनीतवान्। महेन्द्रनाथस्य भोजनं यदा समाप्तं तदा सः एकां कुञ्चिकां महेन्द्रनाथाय दत्त्वा— "एतत् जागरूकतया रक्षतु। द्वारम् उद्घाट्य बहिः कुत्रापि मा गच्छतु। बहिः सर्वत्र अरण्यम्। इतः गन्तुं कोऽपि मार्गः न दृश्यते" इति उक्त्वा पुनरपि कार्यविवरणम् उक्त्वा ततः निर्गतवान्।

मौनम् उपविष्टवतः महेन्द्रनाथस्य मनसि विचाराः उत्पन्नाः। 'एतस्मिन् भवने राजकुमारी स्यात्, कदाचित् न स्यात् अपि। सा अत्र अस्ति वा न वा इति तु उपायेन ज्ञातव्यम्। केन उपायेन एतत् ज्ञातुं शक्येत?' इत्येवं चिन्तयन् तत्रैव उपविष्टवान् महेन्द्रनाथः।

—(अनुवर्तते)



# मल्लनागेन कृतं रक्षणम्

कस्मिंश्चित् ग्रामे मल्लनागः नाम कश्चन मल्लः आसीत्। सः बह्वीषु मल्लयुद्धस्पर्धासु जयं प्राप्तवान् आसीत्। बहवः मल्लाः तेन जिताः आसन्। बहवः पुरस्काराः प्राप्ताः आसन् अपि। एतत् सर्वं दृष्ट्वा ग्रामप्रमुखः नितरां सन्तुष्टः आसीत्। अतः यदा मल्लनागः उद्योगं प्रार्थितवान् तदा सः सन्तोषेण कार्यालयरक्षणकार्ये तं नियोजितवान्।

कदाचित् करसङ्ग्रहसमयः आगतः। विशेषप्रयत्नेन सर्वेभ्यः करधनं सङ्गृह्य कार्यालये स्थापितम्। अत्रान्तरे रात्रौ चोराः आगत्य कार्यालयस्य तालं भञ्जयित्वा समग्रं धनं लुण्ठयित्वा नीतवन्तः।

एतत् श्रुत्वा नितरां कुपितः ग्रामप्रमुखः मल्लनागम् आहूय पृष्टवान्– "अये, चोराणां ग्रहणं बन्धनं च दूरे तिष्ठतु नाम। भीमबलः सन् अपि भवान् तान् सम्मुखीकर्तुम् अपि प्रयत्नं न कृतवान् इति भाति। किमर्थम् एवं भीरुता प्रदर्शिता भवता?" इति।

तदा मल्लनागः उक्तवान्– "श्रीमन्, मया भीरुता न प्रदर्शिता। वस्तुस्थितिः तु एषा– यदा अहं मल्लयुद्धं करोमि स्म तदा मदभिमानिनः जनाः करताडनेन साधुवादेन च मां प्रोत्साहयन्ति स्म। एतेन अहं महान्तम् उत्साहं प्राप्य प्रतिस्पर्धिनं पराजितं करोमि स्म। ह्यः रात्रौ यदा चोराः आगताः तदा तान् सम्मुखीकर्तुं यः उत्साहः आवश्यकः तं पूरयितुं तत्र कोऽपि न आसीत्। उत्साहाभावतः अहं मौनं स्थितवान् आसम्। किं करोमि श्रीमन्, तत्समये अहम् असहायः आसम्" इति।

एतया घटनया ग्रामप्रमुखः विवेकं प्राप्तवान् यत् बाह्यं रूपं दृष्ट्वा कस्मैचित् अपि किमपि कार्यं न दातव्यम्, प्रत्युत तत्तस्य सामर्थ्यं सम्यक् परीक्ष्य कार्ये नियोजनीयम् इति।






# साहसी अङ्गरक्षकः

कर्तव्यभावनया प्रतिदिनं मां नेतुम् आगच्छन् त्रिविक्रमः अद्य यदि मम समीपं न आगच्छेत् तर्हि किं करणीयम् इति चिन्तयन् स्थितम् इव वेतालं वशीकर्तुम् इच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। ततः मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! दिव्याः शक्तयः प्राप्तव्याः इति उद्देशेन भवान् एतस्मिन् असाध्ये अपि कार्ये प्रवृत्तः स्यात् इति अहं भावयामि। श्रमस्य साहसस्य च योग्यं फलं सर्वैः सर्वदा प्राप्यते इति नास्ति। केचन महता श्रमेण अपि अपेक्षिताम् उन्नतिं प्राप्तुं न शक्नुवन्ति। किन्तु अन्ये केचन अदृष्टबलात् अयाचितरूपेण महतीम् उन्नतिं प्राप्नुवन्ति। एतस्य उदाहरणभूता काचित् कथा मम स्मृतिपथम् आगच्छति। भवतः

## वेतालकथा



मार्गायासपरिहारार्थं तां कथां श्रावयामि। श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं विलासवर्मा नाम राजा वैशालीदेशं परिपालयन् आसीत्। तस्य पुंसन्तानः न आसीत्। मृणालिनी नाम पुत्री आसीत्। यदा सा प्राप्तवयस्का जाता तदा राजा चिन्तितवान् यत् अचिरात् एव पुत्र्याः विवाहः निर्वर्तनीयः इति।

पुत्र्याः विवाहं निर्वर्त्य जामातुः उपरि राज्यभारम् आरोप्य शिष्टम् आयुः सुखेन यापनीयम् इति तस्य विचारः आसीत्।

विलासवर्मणः अङ्गरक्षकः जयसिंहः। सः दृढकायः सुन्दराङ्गः च आसीत्। खड्गयुद्धे मुष्टियुद्धे च तस्य विशेषसामर्थ्यम् आसीत्। तदुभयविधयुद्धे तं जेतुं प्रायः कोऽपि न शक्नोति स्म। अतः राजा जयसिंहं विशेषादरेण पश्यति स्म।

राजकुमारी मृणालिनी जयसिंहः च परस्परम् अनुरक्तौ आस्ताम्। किन्तु एतं विषयं तौ परस्परं न उक्तवन्तौ आस्ताम्। राजा अपि एतं विषयं न जानाति स्म।

कदाचित् पाटलीपुत्रस्य युवराजः दीप्तिवर्मा देशाटनं कुर्वन् वैशालीदेशम् अपि आगतवान्। महाराजः विलासवर्मा दीप्तिवर्माणं महता आदरेण स्वागतीकृत्य विविधैः उपचारैः सत्कृतवान्।

दीप्तिवर्मा जामाता भवितुम् अर्हः इति भावना विलासवर्मणः मनसि बहोः कालतः आसीत्। इदानीं दीप्तिवर्मा यदा प्रत्यक्षं दृष्टः तदा सा भावना सम्यक् उद्बुद्धा जाता। अतः सः दीप्तिवर्मणः वासस्य निमित्तं राजभवने एव विशेषव्यवस्थाम् उपकल्पितवान्।

दीप्तिवर्मणः अश्वचालने विशेषासक्तिः। तत्र नैपुण्यम् अपि आसीत् तस्य। आगमनदिने वार्तालापस्य मध्ये सः विलासवर्माणं पृष्टवान्– "भवतः अश्वशाला कथम् अस्ति? एषु दिनेषु नूतनः अश्वः कोऽपि आनीतः वा?" इति।

"अस्मदीया अश्वशाला सुविशाला। श्वः तां पश्याम तावत्। अद्य भवान् किञ्चित् विश्रान्तिसुखम् अनुभवतु" इति उक्तवान्

विलासवर्मा।

अनन्तरदिने सायङ्काले विलासवर्मा दीप्तिवर्मणे स्वस्य गजशालाम् अश्वशालां च प्रदर्शितवान्। अश्वशालायां कोणे कश्चन श्वेतः अश्वः बद्धः आसीत्। तम् अश्वं दृष्ट्वा दीप्तिवर्मा सन्तोषं प्रकटयन्– "अहो, अश्वः नाम एवं स्यात्! अद्यैव एतस्य उपरि उपविश्य सञ्चारः करणीयः मया" इति उक्तवान्।

तदा राजा विलासवर्मा भीतिं प्रकटयन्– "मित्र! अलं साहसेन। एषः अश्वः असामान्यः, सप्ताहात् पूर्वम् अत्र आनीतः च। अश्वशिक्षकेषु एकः अपि एतं वशीकर्तुम् अद्यावधि न शक्तवान्। मम अङ्गरक्षकः जयसिंहः एकः एतम् अश्वं कथमपि वशीकृतवान् अस्ति। ऋते जयसिंहात् अन्यः कोऽपि उपरि उपविशति चेत् एषः अश्वः तं पातयित्वा अग्रे धावति" इति उक्तवान्।

दीप्तिवर्मा साग्रहम् उक्तवान् यत् मया अद्य एतस्य उपरि उपविश्य सञ्चारः क्रियते एव इति। दुस्साहसं मास्तु इति पुनरपि हितं बोधितवान् विलासवर्मा। तथापि दीप्तिवर्मा स्ववचनात् विचलितः न जातः। तदा तत्रैव स्थितः अङ्गरक्षकः जयसिंहः दीप्तिवर्माणम् उक्तवान्– "एतस्य अश्वस्य उपरि उपवेष्टव्यम् एव इति भावना तीव्रा अस्ति चेत् अहं अपि भवता सह तदुपरि उपविशामि। अपायः यथा न भवेत् तथा जागरूकतां



वहामि" इति।

एतत् श्रुत्वा दीप्तिवर्मा जयसिंहं तिरस्कारेण पश्यन्– "तन्नाम भवान् मदपेक्षया समर्थतरः इति? पश्यतु तावत् मम सामर्थ्यम्" इति उक्त्वा अश्वं बन्धविमुक्तं कृत्वा खलीनं हस्तेन गृहीत्वा उत्प्लुत्य अश्वस्य उपरि उपविष्टवान्।

अश्वः वायुवेगेन अधावत्। किञ्चित्कालम् इतस्ततः धावन् दीप्तिवर्माणम् अपीडयत् सः। अश्वं निग्रहीतुं विशेषप्रयत्नं कुर्वन् आसीत् दीप्तिवर्मा। अन्ते अश्वः तं शिलानाम् उपरि पातयित्वा अग्रे अधावत्। दीप्तिवर्मणः शिरसि शरीरे च बहवः व्रणाः जाताः।



दीप्तिवर्मणः पतनं दृष्ट्वा राजभटाः धावन्तः आगत्य तम् उन्नीय राजभवनस्य अन्तः नीतवन्तः।

एतया घटनया राजा विलासवर्मा नितरां खिन्नः जातः। राजवैद्याः आगत्य दीप्तिवर्मणः चिकित्सां कृतवन्तः। सप्ताहाभ्यन्तरे दीप्तिवर्मा वेदनातः मुक्तः जातः। यथापूर्वं स्वास्थ्यं प्राप्तुम् इतोऽपि सप्ताहावधिकः कालः आवश्यकः इति सूचितवन्तः वैद्याः।

दीप्तिवर्मणः स्वास्थ्यं कथम् अस्ति इति द्रष्टुं राजा कदाचित् तस्य वसतिम् आगतवान्। तेन सह पुत्री मृणालिनी, अङ्गरक्षकः जयसिंहः चापि आस्ताम्।

दीप्तिवर्मा जयसिंहं दृष्ट्वा कोपेन— "अये जयसिंह! अन्येषां मुखतः मया भवद्विषये बहु श्रुतम्। असमानः वीरः इति भवतः महान् गर्वः इत्यपि श्रुतं मया। यदि भवान् वीरः स्यात् तर्हि अद्यैव मया सह खड्गयुद्धं बाहुयुद्धं वा करोतु। यदि भवान् मां जेतुं शक्नुयात् तर्हि भवतः असमानवीरत्वं जगति ख्यातं भवेत्" इति।

'व्रणकारणतः हस्तं पादं चापि सम्यक् चालयितुम् अपि अशक्नुवन् एषः जयसिंहं युद्धार्थम् आह्वयन् अस्ति खलु?' इति आश्चर्यम् अनुभूतवान् विलासवर्मा। 'जयसिंहः कीदृशम् उत्तरं दद्यात्' इति पश्यन्ती स्थितवती मृणालिनी।

जयसिंहः क्षणकालस्य मौनस्य अनन्तरं— "युवराजवर्य! अस्वास्थ्यदशायाम् अपि युद्धोत्साहं भवान् यत् प्रदर्शयति तदेव भवतः महावीरत्वं निरूपयति। एतादृशं महावीरं भवन्तं सम्मुखीकर्तुं सामर्थ्यं सर्वथा नास्ति मम। यदि मम एतादृशम् अस्वास्थ्यं स्यात् तर्हि अहं तु एवं युद्धार्थम् उत्साहं न प्रदर्शयेयम् एव। अतः भवता सह युद्धं न इच्छामि अहम्। कृपया अहं क्षन्तव्यः" इति उक्तवान्।

एतत् वचनं श्रुत्वा तत्र स्थिताः सर्वे आश्चर्यचकिताः सन्तुष्टाः च।

इतः केषाञ्चित् दिनानाम् अनन्तरं राजा विलासवर्मा दशभिः भटैः सह मृगयार्थं रथम् आरुह्य प्रस्थितवान्। अङ्गरक्षकः जयसिंहः

यथापूर्वं तम् अनुसृतवान् आसीत्।

अरण्ये काचित् घोरा घटना अकस्मात् संवृत्ता। उन्नतानां गुल्मानां पृष्ठतः स्थितः कश्चन क्रूरः महाव्याघ्रः उच्चैः गर्जन् महाराजस्य उपरि आक्रमणम् अकरोत्। दिग्भ्रान्तः महाराजः अधः अपतत्। मम आयुः समाप्तम् इति चिन्तितवान् सः। व्याघ्रगर्जनस्य श्रवणात् भटानाम् अश्वाः दूरं पलायितवन्तः आसन्।

खड्गम् आकृष्य व्याघ्रं सम्मुखीकर्तुं समय तु न आसीत्। अतः जयसिंहः रिक्तहस्तः एव अपरः व्याघ्रः इव तस्य व्याघ्रस्य उपरि प्रत्याक्रमणं कृतवान्, व्याघ्रस्य कण्ठं दृढं गृहीतवान् च। व्याघ्रः भूमौ अपतत्। जयसिंह-व्याघ्रयोः युद्धं प्रवृत्तम्। व्याघ्रः नखैः दन्तैः च जयसिंहस्य शरीरे बहुधा व्रणान् अकरोत्। जयसिंहस्य शरीरात् रक्तधारा निसृता। तथापि धैर्यच्युतिम् अप्राप्नुवन् जयसिंहः मर्मस्थानेषु व्याघ्रं ताडयन् यमसदनं प्रेषितवान्।

महाराजः रथात् अवतीर्य जयसिंहं प्रीत्या कृतज्ञताभावेन च आलिङ्ग्य– "जयसिंह! महावीरः भवान् मम अङ्गरक्षकः अस्ति यत् तत् मम सौभाग्यम्। माम् अपायात् रक्षितवान् भवान्। भवान् यत् इच्छति तत् प्रार्थयतु, सन्तोषेण ददामि" इति उक्तवान्।

"अहं किमपि न इच्छामि प्रभो। अपायात् भवतः रक्षणम् अङ्गरक्षकस्य मम कर्तव्यम्।



स्वकर्तव्यं पालितवान् अस्मि अहं, तावदेव" इति विनयेन उक्तवान् जयसिंहः।

ततः सर्वे राजधानीं गतवन्तः। राजा राजवैद्यम् आनाय्य जयसिंहस्य चिकित्सां कारितवान्। सप्ताहाभ्यन्तरे जयसिंहः यथापूर्वं स्वस्थः जातः।

ततः मासद्वयस्य अनन्तरं राजधान्याम् आचर्यमाणः प्रातिवार्षिकः वसन्तोत्सवः आगतः। एतदङ्गतया विविधाः स्पर्धाः आयोजिताः आसन्।

विशाले प्राङ्गणे वलयाकारेण वेणुभिः निर्मितायाः वृतेः मध्ये कश्चन मदयुक्तः वृषभः स्थितः आसीत्। महाराजः, राज्ञी, युवराज्ञी मृणालिनी च उन्नते आसने



उपविष्टाः आसन्। पौराः परितः स्थितवन्तः आसन्।

प्रथमम् आस्थानमल्लः जयभैरवः तं दृप्तवृषभं निग्रहीतुं प्राङ्गणं प्रविष्टवान्। जनाः करताडनेन जयकारेण च मल्लं युद्धार्थं प्रोत्साहितवन्तः। मल्लः अग्रे गत्वा वृषभस्य शृङ्गद्वयं दृढं गृहीतवान्। एतत् असहमानः वृषभः क्रोधेन तं शृङ्गाभ्याम् उन्नीय दूरे अपातयत्।

ततः वृषभस्य निग्रहार्थं प्राङ्गणं गतः नगररक्षकः मार्तण्डकेतुः अपि पराजयं प्राप्य व्रणितः सन् भूमौ अपतत्।

तदा महाराजः जयसिंहम् उक्तवान्– "जयसिंह! भवान् तु महावीरः। आयुधरहितः सन् व्याघ्रम् एव मारितवान् भवान् लीलया एतं दृप्तवृषभं पराजयेत्। प्राङ्गणं प्रविश्य पराक्रमं प्रदर्शयतु तावत्" इति।

अत्रान्तरे काचित् विचित्रा घटना घटिता। महाराजः रक्तं राङ्कवं धृतवान् आसीत्। तच्च राङ्कवं वृषभस्य अवधानम् आकर्षत्। वृषभः महता कोपेन राजानं पश्यन् वेणुभिः निर्मितां वृतिं पातयित्वा जनान् अपि पातयन् महाराजस्य दिशि अधावत्।

एतत् दृष्ट्वा राजा सकृत् चीत्कृत्य शिलाप्रतिमा इव स्तब्धतया आसने उपविष्टवान्। पार्श्वे उपविष्टा राजकुमारी मृणालिनी आक्रन्दनं कुर्वती मूर्च्छाम् अगच्छत्।

राज्ञः पार्श्वे एव स्थितः जयसिंहः झटिति अग्रे आगत्य बलात् वृषभस्य शृङ्गे गृहीत्वा तदीयं मुखं भूमिसमीपं नीतवान्। ततः स्वपादेन तस्य अग्रिमपादौ दृढं प्रहृत्य तं अपातयत्। ततः तस्य मुखे, उरसि, कण्ठे च पादेन निरन्तरं प्रहृतवान्। उत्थातुम् अशक्नुवन् वृषभः क्षीणध्वनिं कुर्वन् रक्तं वमन् शयनम् अकरोत्।

एतत् दृष्ट्वा परितः स्थिताः सर्वे 'जयसिंहः जयतु' इति उच्चैः उद्घोषितवन्तः। महाराजस्तु सन्तोषभरेण आसनात् उत्थाय जयसिंहं दृढम् आलिङ्ग्य– "जयसिंह! द्वितीयवारं भवान् स्वप्राणान् पणीकृत्य मम प्राणान् रक्षितवान्। अहं नितराम् उपकृतः

अस्मि। एतस्यां स्पर्धायां जयः भवतः एव। योग्येन पुरस्कारेण भवन्तं सम्मानयिष्यामि" इति उक्तवान्।

तदा जयसिंहः– "प्रभो, कर्तव्यपालनमात्रं कृतं मया। स्पर्धाङ्गणम् अप्रविष्टवतः मम स्पर्धायां जयः कथं स्यात्? अतः कोऽपि पुरस्कारः न आवश्यकः मह्यम्। प्रथमम् एतस्य वृषभस्य चिकित्सा प्रचलतु तावत्" इति विनयेन उक्तवान्।



"स्पर्धानिमित्तकः पुरस्कारः मास्तु चेत् तत् भवतु नाम। प्राणान् रक्षितवते भवते मया किमपि दातव्यम् एव खलु? अन्यथा अहं कृतघ्नः स्याम्। अतः मम प्रीतिपात्रपुत्री मृणालिनी दीयते मया। एतत् अनुमतं खलु भवतः?" इति मन्दहासपूर्वकं पृष्टवान् राजा।

"यदि एतत् स्वीकर्तुम् अहम् अर्हः इति भवतः आशयः स्यात्, यदि च मृणालिनीदेवी एतं प्रस्तावं सहर्षम् अङ्गीकुर्यात् तर्हि एतत् मम प्रियम् एव" इति उक्तवान् जयसिंहः।

तदा पार्श्वे एव स्थिता मृणालिनी लज्जया मन्दहासपूर्वकम् उक्तवती– "तात! भवान् यथा वदति तथा कर्तुं ससन्तोषं सिद्धा अहम्" इति।

वेतालः एवं कथां समाप्य अवदत्– "अये राजन्! राजकुमारीं मृणालिनीं परिणेतुं, वैशालीदेशस्य उत्तराधिकारित्वं प्राप्तुं च दीप्तिवर्मा अर्हः इत्यत्र नास्ति खलु सन्देहः? तस्य धैर्यसाहसादयः अपि अपूर्वाः। उद्धतम् अश्वम् आरुह्य सञ्चारं कर्तुं सः यत् प्रयत्नं कृतवान् तदेव अत्र प्रमाणम्। सः एतस्मिन् प्रयत्ने सफलः न जातः स्यात् नाम, तथापि तस्य धैर्यसाहसादयः तु तेन अवश्यं प्रकटिताः अभवन् एव। व्रणात् अमुक्तः सन् अपि सः महावीरेण जयसिंहेन मल्लयुद्धं कर्तुं सिद्धः जातः यत् तत् तस्य धैर्यसाहसादीनाम् अपरम् उदाहरणम्। किन्तु जयसिंहस्य व्यवहाराः एवं न आसन्। द्विवारं सः राज्ञः प्राणान् रक्षितवान् इति तु सत्यम् एव। किन्तु सन्दर्भद्वये अपि तदीयप्राणानाम् अपि अपायः आसीत्। प्राणापाये सति सर्वे पराक्रमम् अवश्यं प्रदर्शयन्ति। तस्य अन्तरङ्गे भीरुता आसीत्। अतः एव दीप्तिवर्मा यदा स्पर्धार्थम्

आहूतवान् तदा व्याजं कथयन् सः निराकरणं प्रदर्शितवान्। व्याघ्रसम्मुखीकरणे वृषभ-निग्रहणे च तेन यत् साफल्यं प्राप्तं तत् तु अदृष्टबलात्। तस्मात् एव कारणात् सः महावीरः इति ख्यातिम् अपि प्राप्तवान् इति मम आशयः। एषः मम आशयः योग्यः उत न इति जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "दीप्तिवर्मणि राजयोग्याः गुणाः सर्वथा न आसन्। असूयापरः सः। अन्यस्य उत्कर्षं सोढुं सामर्थ्यं न आसीत् तस्य। अतः एव सामर्थ्ये असत्यपि अश्वस्य उपरि उपवेष्टुं गतः सः अपमाननम् अनुभूतवान्। व्रणोपशान्तितः पूर्वम् एव जयसिंहं युद्धार्थं सः यत् आहूतवान् तत्रापि कपटता स्फुटं दृश्यते। 'यदि जयः प्राप्येत तर्हि महावीरः इति ख्यातिः प्राप्यते। यदि अपजयः प्राप्येत तर्हि व्रणादीनां कारणतः एवं जातम् इति वक्तुं शक्यते' इति दीप्तिवर्मणः चिन्तनम् आसीत्। एवं दीप्तिवर्मा असूयावान्, अविवेकी कुतन्त्रनिपुणः च। किन्तु जयसिंहः न तथा। व्याघ्रसम्मुखीकरणे वृषभनिग्रहणे च प्राणरक्षणार्थं तेन तथा व्यवहृतम् इति तु मिथ्यावचनम्। यदि सः धैर्यवान् न स्यात् तर्हि अन्ये भटाः इव एषः अपि पलायनम् अकरिष्यत्। दीप्तिवर्मा स्पर्धार्थं यत् आहूतवान् तत् अनुचितम् इति जानन् जयसिंहः निराकरणं प्रदर्शितवान्। अतः एव परितः स्थिताः जनाः दीप्तिवर्मणः व्यवहारं स्मरन्तः हसितवन्तः। जयसिंहः राजनिष्ठः, धीरः, साहसी, विनीतः च आसीत्। राजत्वयोग्यताम् एते गुणाः निरूपयन्ति, न तु कुलादयः। अतः एव राजा विलासवर्मा जयसिंहाय स्वपुत्रीं मृणालिनीं दातुं सिद्धः जातः" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



## अस्मद्देशीया पशुपक्षिसम्पत्–

# 'हुपो'पक्षी



'यदा राजा सालमन् उड्डयनसमर्थस्य सिंहासनस्य उपरि उपविश्य गच्छन् आसीत् तदा आतपतापः उग्र आसीत्। तत्समये उपरि डयमानाः गृध्राः छायादानं निराकृतवन्तः। तदा राजा शापं दत्तवान् यत् भवतां कण्ठं परितः रोमाणि मा भवन्तु इति। तस्मिन् एव समये 'हुपो'पक्षिणां गणः तत्र आगतः। ते च पक्षिणः राज्ञः उपरि डयमानाः छायां कल्पितवन्तः। तेन सन्तुष्टः राजा तेषां पक्षिणां शिरसः उपरि सुवर्णमयी शिखा यथा स्यात् तथा वरं दत्तवान्। किन्तु जनाः सुवर्णलोभतः तान् पक्षिणः मारयितुं यदा उद्युक्ताः तदा तेषां रक्षणार्थं सुवर्णवर्णां शिखाम् अनुगृहीतवान् राजा। तेन च पक्षिणाम् अपायः अपगतः' इति एवं श्रूयते काचित् पुराणकथा।

अस्माकं देशे 'उपुपिदे'(Upupidae) नामिका पक्षिजातिः अस्ति। एतस्याः जातेः अद्वितीयः पक्षी 'हुपो'(Hoopoe)। शिरसि सुन्दरी शिखा, पृष्ठे पक्षयोः पुच्छे च चित्रोष्ट्रस्य इव श्वेत-कृष्णरेखाः च एतस्य भवन्ति। द्वादशाङ्गुलदीर्घस्य एतस्य वर्णः श्वेतमिश्रितः पीतः। यदा एषः आहारार्थं भूमिखननादिकं करोति तदा एतस्य शिखा पुञ्जीकृता दृश्यते। किन्तु यदा एषः सन्तोषेण तिष्ठति तदा सा शिखा व्यजनम् इव प्रसृता सती सुन्दरी दृश्यते। एतस्य चञ्चूः दीर्घा कृशा च। 'हु-पो', 'हु-पो-पो' इति एषः कूजति इत्यतः एतस्य नाम 'हुपो' इत्येव जातम्।

भित्तीनां विभेदेषु, छदीनां रन्ध्रेषु, वृक्षकोटरेषु च एषः नीडं रचयति। एषः नीडे दुर्गन्धयुक्तान् कृमिकीटान्, अन्यविधान् लघुजीविनः च आनीय स्थापयति। एषः 'कृषिकमित्रम्' इति उच्यते, यतः एषः सस्यवृद्धिनाशकान् कीटादीन् गृहीत्वा खादन् कृषिकस्य उपकारं करोति।



# आधुनिकं भारतीयसाहित्यम्

ओडिसाराज्यस्य कोरापुटमण्डले दीर्घा पर्वतश्रेणि:, अरण्यानि च दृष्टिपथम् आगच्छन्ति, यत्र च लघुग्रामाः भवन्ति। एतेषु परजा, गोण्ड इत्यादीनां पर्वतजातीनां जनाः निवसन्ति। एते न हि अक्षरज्ञाः। पामराः सरलाः च एते। नागरिकप्रपञ्चे स्थिताः केचन एतान् सम्यक् लुण्ठयन्ति।

सुक्रः कश्चन परजाजातीयः निर्धनः। कदाचित् कश्चन व्याघ्रः तस्य पत्नीम् उन्नीय अनयत्। मन्दीयः तिकरः चेति उभौ पुत्रौ, जिली बिली चेति उभे पुत्र्यौ च स्तः सुक्रस्य।

कदाचित् तं ग्रामं प्रति सर्वकारीयः अधिकारी कश्चन आगतः। सुक्रः कथमपि तस्य कोपस्य पात्रं

# परजा – पर्वतीयबालानां कथा



जातः। अधिकारिणः कोपस्य उपशमनार्थं सुक्रेण उत्कोचः दातव्यः अभवत्। किन्तु सुक्रस्य गृहे एका वराटिका अपि न आसीत्। अतः अनन्योपायः सुक्रः कुसीदवणिकृतः ऋणम् आनीतवान्। स च कुसीदवणिक् निर्दयः आसीत्। 'यावत् ऋणं न प्रत्यर्प्यते तावत् भवान् भवत्पुत्रः च मद्गृहे दासौ भवताम' इति सूचितवान् कुसीदवणिक्। एवं सुक्रः तस्य कनिष्ठपुत्रः च दासौ जातौ।

ऋणं प्रत्यर्पयितुम् असमर्थाः बहवः एवं दास्यजीवनं यापयन्ति। एषा दास्यपद्धतिः 'गोटी' इति उच्यते।

सुक्रस्य ज्येष्ठः पुत्रः मन्दीयः सुराचौर्यसमये गृहीतः। आत्मनः मोचनार्थं तेनापि उत्कोचः दातव्यः अभवत्। तदा सः अपि कुसीदवणिकृतः ऋणं स्वीकृत्य दास्यगर्ते पतितः।

सुक्रस्य पुत्र्यौ खनीप्रदेशे शिलावहनार्थं गच्छतः स्म। 'एवं बहु कार्यं क्रियते चेदपि ऋणात् मुक्तिः न भवेत्' इति जानन् सुक्रः स्वस्य भूमिं तस्मै कुसीदवणिजे आधिरूपेण समर्प्य पुत्राभ्यां सह ऋणात् मुक्तिं प्राप्तवान्।

सुक्रः पुत्र्यौ गृहं प्रत्यानीतवान्। किन्तु तावता एव ताभ्यां स्वेच्छाजीवनम् अभ्यस्तम् आसीत्। ज्येष्ठा



जिली लघुकुटीरमात्रे स्थातुं न इच्छति स्म। कुसीदवणिक् यदा यदा ग्रामम् आगच्छति तदा तदा तेन रहसि मिलति स्म सा।

अल्पे एव काले एतत् प्रकटितम् अभवत्। सुक्रः नितरां कुपितः अभवत्। किन्तु कामपि प्रतिक्रियां प्रदर्शयितुम् अशक्नुवन् सः मौनं स्थितवान्। कुसीदवणिक् जिलीं नगरं नीतवान्। एतस्याः घटनातः सुक्रः तत्पुत्रौ च अवमानेन नतमस्तकाः जाताः।

दृढकायौ सुक्रपुत्रौ महता श्रमेण कार्यं कुर्वन्तौ धनं सम्पाद्य कुसीदवणिजे यावत् दातव्यम् आसीत् तावत् दत्तवन्तौ। किन्तु तत्समये कुसीदवणिक् तस्मिन् क्षेत्रे नारङ्गसस्यानि आरोपितवान् आसीत्। अतः सः भूमेः प्रत्यर्पणं निराकृतवान्। सुक्रः न्यायालयं प्रति एतं विवादं नीतवान्।

न्यायनिर्णयदिनं न्यायालयेन निश्चितम्। किन्तु न्यायालयाधिकारिणः कुसीदवणिक्तः उत्कोचं स्वीकृत्य सुक्रं मिथ्यादिनाङ्कं सूचितवन्तः।

'भूमिः अवश्यं प्राप्यते' इति आशया सुक्रः तत्पुत्रौ च अधिकारिभिः सूचिते दिने नगरं गतवन्तः। किन्तु तत्र तैः ज्ञातं यत् निर्णयः पूर्वम् एव श्रावितः इति, सुक्रस्य अनुपस्थितिं निमित्तीकृत्य भूमिः कुसीदवणिजः अधीना इत्येव निर्णीतम् इति च!

एतां वार्तां श्रुत्वा ते निराशाकूपे पतिताः। अन्धकारमयं स्वजीवनं स्मरन्तः रुदन्तः ते कुसीदवणिजः समीपं गत्वा दैन्येन प्रार्थितवन्तः यत् अस्माकं भूमिः कृपया प्रत्यर्पणीया इति।

किन्तु धनमदेन युक्तः सः कुसीदवणिक् सुक्रम् अवाच्यैः शब्दैः निन्दित्वा– "भवन्तः इत निर्गच्छन्तु। अन्यथा भवतः ज्येष्ठा पुत्री जिली मया यथा गृहे आनीय स्थापिता तथैव कनिष्ठा पुत्री बिली अपि बलात् आनीयते" इति सूचितवान्।

एतत् श्रुत्वा क्रुद्धः सुक्रः विद्युद्वेगेन अग्रे गत्वा हस्ते स्थितेन परशुना कुसीदवणिजः शिरसः च्छेदनं कृतवान्। "अस्माकं भूमिं वशीकृतवान् स्यात् भवान्। किन्तु अनुभोक्तुं तु न शक्यते भवता" इति उच्चैः उक्तवन्तः ते त्रयः अपि। जिली तत्रत्यं दृश्यं दृष्ट्वा भीता कुत्रापि पलायितवती।

कुसीदवणिजः मुण्डम् उन्नीय त्रयः अपि आरक्षकस्थानकं गत्वा– "एतं वयम् एव मारितवन्तः। योग्येन क्रमेण दण्डनीयाः वयम्" इति निवेदितवन्तः।

एतत् दृश्यं दृष्ट्वा आरक्षकाधिकारी क्षणकालं स्तब्धः जातः।

उडियाभाषाक्षेत्रे श्रेष्ठकृतिकारत्वेन प्रसिद्धः गोपीनाथ मोहन्ती (१९१४-१९९१) एत कथाग्रन्थं रचितवान् अस्ति। एषः साहित्याकाडमीप्रशस्तिं ज्ञानपीठप्रशस्तिं च प्राप्तवान् अद्वितीयः लोकप्रसिद्धः उडियाकृतिकारः अस्ति।

# भवन्तः जानन्ति वा?

१. इन्द्रगिरि-चन्द्रगिरिनामकयोः पर्वतयोः मध्ये स्थितं मन्दिरनगरं किम्?
२. फारस् कः स्थापितवान्?
३. १९९० तमे वर्षे नवम्बर्मासे ९ दिनाङ्के का महाघटना घटिता?
४. चीनदेशं जितवान् मङ्गोलसम्राट् कः?
५. बांग्लादेशस्य जन्म कदा जातम्?
६. सहगमनपद्धतेः विरोद्धा, ब्रह्मसमाजस्य संस्थापकः, समाजसेवकः कः?
७. एतस्य वर्षस्य अक्टोबर्मासे १२ दिनाङ्के कस्याः ऐतिहासिकघटनायाः स्मारकोत्सवः आचरितः?
८. 'मापिळे'नाम्ना के आहूयन्ते?
९. अमेरिका (यू.एस्.ए.)देशस्य राष्ट्रियः पशुः कः?
१०. पुराणेषु एवं हि श्रूयते यत् अङ्गुष्ठे बाणप्रहारं प्राप्य कश्चन महात्मा प्राणैः वियुक्तः अभवत् इति। सः महात्मा कः?
११. वर्णाधारेण चत्वारः समुद्राः निर्दिश्यन्ते। ते के?
१२. विश्वस्तरे अतिसुदीर्घः रेलुमार्गः कः?
१३. द्विवारं नोबेलुपारितोषिकं प्राप्तवती अद्वितीया महिला का?
१४. उपनेत्रेषु उपयुज्यमानं 'बाँई-फोकल-लेन्स्' कः आविष्कृतवान्?
१५. सर्वप्रथमं युनेस्कोप्रायोजितम् अन्ताराष्ट्रियं नगरं किम्? तस्य निर्माणं कुत्र जातम्?

## उत्तराणि

१. श्रवणबेळगोळनगरम्, यच्च कर्णाटके अस्ति।
२. सैरस् महान्, क्रि.पू. ५००-४०० मध्ये।
३. पूर्व-पश्चिमजर्मनीदेशयोः मध्ये १९६९ तमे वर्षे निर्मिता बर्लिनुभित्तिः तयोः देशयोः एकीकरणस्य सङ्केतरूपेण भञ्जिता आसीत्।
४. कुबलायी खान्।
५. १९७१ तमे वर्षे डिसेम्बर्मासे।
६. राजाराममोहनरायः।
७. क्रिस्टफर् कोलम्बसुवर्येण कृतस्य अमेरिकान्वेषणस्य ५०० तमः वार्षिक-महोत्सवः।
८. केरलस्य मलबार्प्रदेशीयाः मुसलमान् जनाः।
९. श्वेतमस्तकः गरुडपक्षी।
१०. श्रीकृष्णः।
११. श्वेत-कृष्ण-रक्त-नील-सागराः।
१२. ट्रान्स् सैबेरियन् रेलुमार्गः, यश्च मास्कोतः व्लाडिवास्टोकपर्यन्तं ५,८६४ मैल् दीर्घं प्रसृतः अस्ति।
१३. मेरी क्यूरी।
१४. बेंजमिन् फ्रांकलिन्।
१५. अरोविल्ले। पाण्डिच्चेरिराज्ये।



# कलावतीविजयः

कस्मिंश्चित् ग्रामे पूर्वं सोमसुन्दरः नाम कश्चित् आसीत्। सः पूजापुरे उद्योगी आसीत्। कलावतीनामिकां तरुणीं परिणीतवान् सः। विवाहानन्तरं 'पत्न्या सह नगरे वासः करणीयः' इति उद्देशेन सः भाटकगृहस्य अन्वेषणार्थं सर्वत्र अटितवान्। किन्तु कुत्रापि तेन गृहं न प्राप्तम्।

नगरसीमायाम् एकं भवनम् अस्ति इति तेन श्रुतम्। सः पत्न्या सह तत् गृहं दृष्टवान्। गृहं तु सुन्दरम् आसीत्। तस्य गृहस्य स्वामी कः इति समीपस्थान् जनान् पृष्टवान् सः। तदा ते उक्तवन्तः– "एतस्य गृहस्य स्वामी धनराजः केभ्यश्चित् वर्षेभ्यः पूर्वम् एव दिवङ्गतः। इदानीम् तस्मिन् गृहे धनराजः पिशाचरूपेण वसति इति श्रूयते। यः तत्र वसति तस्मिन् भीतिम् उत्पाद्य पिशाचः तं ततः प्रेषयिष्यति। अतः तस्मिन् गृहे वासः न उचितः" इति।

एतत् श्रुत्वा सोमसुन्दरः पत्नीम् उक्तवान्– "अये, एतस्य गृहस्य सहवासः एव मास्तु आवयोः" इति।

तदा कलावती उक्तवती– "पिशाचात् भीतिः नास्ति मम। यदि एतस्मिन् गृहे वसेम तर्हि भाटकं दातव्यं न भविष्यति। पिशाचम् उपायेन निवारयामः चेत् विना व्ययेन तत् गृहम् अस्मदीयं भविष्यति। अतः तस्मिन् गृहे एव वसाव तावत्" इति।

पत्न्या एवम् उक्ते अपि तत्र वासं कर्तुं धैर्यं नास्ति सोमसुन्दरस्य। अन्ते पत्न्या पुनः पुनः यदा अनुरोधः कृतः तदा सः तत्र वासार्थं सिद्धः जातः। तत् गृहं कीलितम् आसीत्। कुञ्चिका कुत्र इति तु कोऽपि न जानाति स्म। "यदि तत्र वासं कर्तुं भवतोः धैर्यं स्यात् तर्हि तालं भञ्जयताम्। वयं तु तत्र विरोधं न

"भामहः"



"गृहस्य स्थितिः दृष्टा चेत् ज्ञायते यत् अत्र धनराजः पिशाचरूपेण निवसति इति। तस्य पत्नीपुत्रादयः अपि पिशाचरूपेण अत्रैव निवसेयुः अपि" इति।

तावता तत्र पिशाचः धनराजः उपस्थितः सन्– "अहम् अस्मि पिशाचः धनराजः। महता व्ययेन एतत् गृहं निर्मितम् इत्यतः एतस्मिन् मम अधिकः व्यामोहः। अतः अहं पिशाचरूपेण अत्र निवसामि। भवतोः अत्र वासे मम कोऽपि आक्षेपः नास्ति। किन्तु गृहम् इदानीं यथा शुद्धम् अस्ति तथैव अग्रे अपि स्यात्। स्वच्छता न पालिता चेत् अहं भवन्तौ पीडयिष्यामि। अतः जागरूकता भवतु" इति तौ अवदत्।

पिशाचदर्शनात् नितरां भीतः सोमसुन्दरः मौनं स्थितवान् आसीत्। तदा कलावती पिशाचं पृष्टवती– "मित्र! भवतः वासः अत्र कुत्र?" इति।

तदा पिशाचः मञ्चादिभिः युक्तं स्ववासप्रकोष्ठम् अङ्गुल्या निर्दिश्य– "अत्र तु प्रवेशः सर्वथा निषिद्धः" इति असूचयत्।

सोमसुन्दर-कलावत्योः वासः नूतनगृहे आरब्धः। कलावती प्रतिदिनं गृहं तु स्वच्छीकरोति स्म। किन्तु अवकरान् गृहस्य पृष्ठतः एव राशीकृतवती सा। शाकादीनां त्वगादयः अपि तत्रैव स्थापिताः। एतत् दृष्ट्वा पिशाचः कोपेन– "सर्वम् अवकरराशिम् इतः अपनयतु शीघ्रम्" इति आज्ञाम्

प्रकटयामः" इति उक्तवन्तः समीपवासिनः जनाः।

कलावती सोमसुन्दरः च मिलित्वा महता कष्टेन तालं भञ्जितवन्तौ। द्वारम् उद्घाट्य अन्तः गतवन्तौ च। आश्चर्यं नाम गृहस्य अन्तर्भागः नितरां स्वच्छः आसीत्। एकः अपि अवकरः कुत्रापि न आसीत्। ऊर्णनाभजालम् अपि कुत्रापि न आसीत्। एकस्मिन् प्रकोष्ठे कश्चन मञ्चः आसीत्। मञ्चस्य उपरि मृदुला शय्या प्रसारिता आसीत्। तदुपरि शुभ्रं परिमलयुक्तं च आच्छादकं स्थापितम् आसीत्।

एतत्सर्वं दृष्ट्वा आश्चर्यं भीतिं च अनुभवन् सोमसुन्दरः पत्नीम् उक्तवान्–

अकरोत्।

तदा कलावती अवदत्– "भवान् पूर्वं किम् अवदत्? गृहस्य अन्तः स्वच्छता स्यात् इति खलु? तत् वचनं तु पालितम्। बहिः अवकरराशिः न स्यात् इति भवता न उक्तं खलु? अतः अस्माकं यत्र इच्छा तत्र अवकरं स्थापयामः वयम्" इति। अनन्तरदिने सा गृहे अपि स्वच्छीकरणं परित्यक्तवती।

एतत् दृष्ट्वा सोमसुन्दरः पत्नीम् उक्तवान्– "भवती एवं गृहम् अस्वच्छं स्थापयति चेत् पिशाचः आवां मारयेत्। अतः गृहं कृपया स्वच्छं स्थापयतु" इति।

तदा कलावती पतिम् उक्तवती– "भोः, अलं चिन्तया। अहं सर्वं विचिन्त्य एव कुर्वती अस्मि। कानिचन दिनानि भवान् मौनं तिष्ठतु तावत्" इति।

नष्टं शाकादिकम् अपि बहिः न क्षिप्तम् इत्यतः द्वित्रेषु दिनेषु गृहे दुर्गन्धः उत्पन्नः। गृहस्य पृष्ठतः स्थितात् अवकरराशितः तु महान् दुर्गन्धः निर्गच्छति स्म।

एकदा मध्यरात्रे धनराजपिशाचः कलावत्याः मञ्चस्य उपरि स्थित्वा क्रोधेन– "अये! यदा गृहे पदं स्थापितं तदा एव मया स्मारितं खलु– स्वच्छता रक्षणीया इति? मम वचनं धिक्करोति वा भवती? पश्यतु इदानीम्। भवतीं यमसदनं प्रेषयिष्यामि। इष्टदेवं स्मरतु तावत्" इति अवदत्।

कलावती किञ्चिदपि भीतिम् अप्राप्नुवती



धैर्येण पिशाचं मञ्चात् अधः पातयित्वा– "पिशाचाः मनुष्येषु भीतिं जनयितुं शक्नुयुः नाम। किन्तु ते मानवान् मारयितुं तु सर्वथा न शक्नुवन्ति। पिशाचानां शक्तिं जानामि अहम्" इति वदन्ती मञ्चात् अवतीर्य कोणस्थां सम्मार्जनीं हस्तेन गृहीतवती।

तदा पिशाचः आक्रोशनं कुर्वन् दूरं गत्वा स्थित्वा– "अये दुष्टे! भवतीं न पीडयामि। समग्रं गृहं भवती यथा इच्छति तथा रक्षतु। किन्तु मम प्रकोष्ठं तु कृपया मा आगच्छतु" इति अवदत्।

कलावती भीतं सोमसुन्दरं नेत्रसङ्केतेन सान्त्वयित्वा– "मध्यरात्रे आगत्य मम निद्रां नाशितवान् खलु? अये दुष्टपिशाच! श्वः

एतस्य फलम् अनुभोक्तव्यं भवता" इति उक्त्वा शयनं कृत्वा निद्रां कृतवती।

अनन्तरदिने प्रातः कलावती अवकरराशितः दुर्गन्धयुक्तम् अवकरम् आनीय पिशाचप्रकोष्ठे प्रसारितवती। तदा पिशाचः कम्पमानः कोणे स्थित्वा– "अये! पिशाचाः घोराः इति लोके प्रसिद्धिः अस्ति! भवती ततोऽपि घोरा। गृहस्य दुर्गन्धस्य कारणतः मम जुगुप्सा आगता। गृहविषये स्थितः व्यामोहः सर्वथा नष्टः मम। अहम् अद्यैव इतः निर्गत्य अरण्ये कस्मिंश्चित् वृक्षे सुखेन वासं करिष्यामि। तत् आस्तां तावत्। भवत्या सदा गृहं स्वच्छं स्थापनीयम्। अन्यथा अद्य मया यथा गृहं परित्यज्य गम्यते तथा कदाचित् भवत्याः पतिः अपि गृहं परित्यज्य गच्छेत्। अतः स्वच्छतां गृहे रक्षतु" इति उक्त्वा अरण्यम् उद्दिश्य अगच्छत्।

सायं सोमसुन्दरः यदा कार्यालयतः प्रत्यागतः तदा कलावती महता सन्तोषेण प्रवृत्तं समग्रं निवेदितवती।

तदा सोमसुन्दरः तृप्त्या निश्श्वस्य– "अये, धीरा भवती। किन्तु पिशाचस्य उपदेशं स्मरति खलु भवती? इतःपरम् अपि यदि भवती गृहस्य स्वच्छतां यदि न रक्षेत् तर्हि अहम् अपि पिशाचः इव गृहं परित्यज्य गच्छेयम्" इति विनोदमिश्रितेन स्वरेण उक्तवान्।

"मया यत् कृतं तस्य फलतः एव एतत् विशालं गृहम् अस्मदीयं जातं खलु? स्वच्छता तु ममापि प्रिया एव। श्वः आरभ्यः पश्यतु भवान्, गृहं दर्पणः इव प्रतिफलनशीलं दृश्यते!" इति उक्तवती कलावती।

"किम् एतत् औदासीन्यं भवत्याः? श्वः करणीयानि कार्याणि बुद्धिमान् अद्यैव कुर्यात्। अतः अद्यैव कुतो वा गृहं स्वच्छं न करणीयं भवत्या?" इति पृष्टवान् सोमसुन्दरः।

"तदपि युक्तम् एव। किं विलम्बेन? अद्यैव स्वच्छं करवाव। भवान् अपि साहाय्यं करोतु किञ्चित्" इति हसन्ती उक्त्वा कलावती स्वच्छतायाम् उद्युक्ता अभवत्।






# विश्वासार्हता

चन्द्रशेखरो नाम कश्चित् हरिपुरे निवसति स्म। तदीयः मूलग्रामः तु नद्याः तीरे आसीत्। महापूरस्य कारणतः तस्य क्षेत्रं गृहं च यदा नष्टं तदा सः सर्वकारेण दत्तं नष्टपरिहारधनं स्वीकृत्य हरिपुरे भूमिं क्रीत्वा वसतिम् आरब्धवान् आसीत्।

चारुकीर्तिः नाम कश्चित् तद्ग्रामवासी कदाचित् तम् ऋणं प्रार्थितवान्। धनं दातव्यं वा न वा इति सन्देहः चन्द्रशेखरस्य। अतः सः कदाचित् प्रातः मार्गे गच्छन् अभिमुखम् आगतं मारहरं उक्तवान्– "श्रीमन्, क्षणं तिष्ठतु तावत्। भवान् किञ्चित् प्रष्टव्यः अस्ति मया" इति।

मारहरः गमनं स्थगितवान्। चन्द्रशेखरः तस्य समीपं गत्वा– "शिवालयमार्गे निवसन् चारुकीर्तिः कीदृशः? भवान् एतद्ग्रामीणः एव इत्यतः तं सम्यक् जानीयात् एव भवान्" इति उक्तवान्।

तदा आश्चर्येण पृष्टवान् मारहरः– "चारुकीर्तिविषये किमर्थं जिज्ञासा भवतः?" इति।

"सः माम् ऋणं प्रार्थितवान् अस्ति। अहं तु सद्यः एतं ग्रामम् आगतः। चारुकीर्तिः कीदृशः इति अहं न जानामि। कञ्चित् पृष्ट्वा तस्य योग्यतां ज्ञात्वा ऋणं ददामि इति चिन्तयित्वा– 'दिनद्वयस्य अनन्तरम् आगच्छतु। तदा पश्याम तावत्' इति उक्त्वा तं प्रेषितवान् अस्मि" इति उक्तवान् चन्द्रशेखरः।

चन्द्रशेखरस्य वचनं श्रुत्वा मारहरः मनसि एव हसितवान्। अनन्तरं– "श्रीमन्! चारुकीर्तिः वचनस्य परिपालकः न। अतः एतादृशाय ऋणं दत्तं चेत् तत् महता कष्टेन प्रतिप्राप्तव्यं भवेत्। एतादृशैः सह

अर्थव्यवहारः न उचितः इति मम अभिप्रायः" इति उक्त्वा ततः निर्गतवान्।

दिनद्वयस्य अनन्तरं चारुकीर्तिः चन्द्रशेखरस्य गृहम् आगतवान्। तदा चन्द्रशेखरः तम् उक्तवान्– "ऋणं दीयते इति मया उक्तम् इति तु सत्यम् एव। किन्तु अन्यतः आगन्तव्यं धनम् इतोऽपि हस्ते न आगतम्। अतः अद्य मम हस्ते धनं नास्ति। कृपया क्षन्तव्यः अहम्" इति।

तदा चारुकीर्तिः महत् दैन्यं प्रदर्शयन्– "श्रीमन्! मम परिस्थितिः कीदृशी इति देवः एव जानाति, न अन्ये। मम पत्नी नितराम् अस्वस्था अस्ति। यदि नगरं नीत्वा योग्या चिकित्सा न कार्येत तर्हि सा गतप्राणा स्यात्। किन्तु एतत्सन्दर्भे एव अहं रिक्तहस्तः जातः। अहं विश्वासपात्रं वा न वा इति ग्रामीणान् पृष्ट्वा जानातु भवान्। मासाभ्यन्तरे योग्यया वृद्ध्या सह भवदीयम् ऋणम् अवश्यं प्रत्यर्पयिष्यामि। भवतः उपकारं च आजीवनं स्मरिष्यामि" इति प्रार्थितवान्।

चारुकीर्तेः दैन्यं दृष्ट्वा करुणां प्राप्य चन्द्रशेखरः– "अस्तु, श्वः आगच्छतु। धनं दातुं शक्यं चेत् दास्यामि" इति उक्तवान्।

चारुकीर्तेः गमनस्य अनन्तरं चन्द्रशेखरः गृहात् निर्गत्य समीपे स्थितं शिवालयं गतवान्। तस्मिन् समये आलयस्य अर्चकः शिवाचार्यः नद्यां स्नानं समाप्य मन्त्रोच्चारणं कुर्वन् पुष्पपात्रेण सह आलयं प्रति आगच्छन् आसीत्।

चन्द्रशेखरः तं विनयेन नमस्कृत्य तेन



सहैव गच्छन् स्वस्य समस्यां सङ्ग्रहेण निरूप्य– "सः चारुकीर्तिः महति कष्टे पतितः इव भाति। तस्य साहाय्यं करणीयम् उत न इति मम मनसि द्वन्द्वभावना। चारुकीर्तिविषये भवतः अभिप्रायः कः? अहं यदा पृष्टवान् तदा मारहरः सूचितवान् यत् चारुकीर्तिः न हि विश्वासपात्रम् इति। अतः भवन्तं प्रष्टुम् आगतवान् अस्मि" इति उक्तवान्।

एतत् वचनं श्रुत्वा शिवाचार्यः चन्द्रशेखरं सकृत् आपादमस्तकं दृष्ट्वा– "अन्येषां वचने विश्वासः न करणीयः। कृतं चेत् हानिः निश्चिता" इति उक्त्वा आलयं प्रविष्टवान्।

चन्द्रशेखरः चिन्तनं कुर्वन् एव गृहं प्रत्यागतवान्। अनन्तरदिने यदा चारुकीर्तिः आगतः तदा तस्मै ऋणरूपेण धनं दत्त्वा तं प्रेषितवान्।

ततः त्रिचतुराः मासाः अतीताः। किन्तु चारुकीर्तेः दर्शनम् एव नास्ति। महत् दैन्यं प्रदर्श्य ऋणं नीतवान् सः अवश्यं स्वयम् आगत्य तत् प्रत्यर्पयेत् इति चिन्तयित्वा पुनरपि एकं मासं यावत् प्रतीक्षां कृतवान् चन्द्रशेखरः। तथापि चारुकीर्तिः यदा न दृष्टः तदा खिन्नः चन्द्रशेखरः चारुकीर्तेः गृहम् एव गत्वा 'ऋणं प्रत्यर्पयतु' इति उक्तवान्।

चन्द्रशेखरस्य दर्शनतः अल्पम् अपि खेदम् अननुभवन् चारुकीर्तिः– "भवता दत्तं धनं न खादामि अहम्। अवश्यं प्रत्यर्पयिष्यामि। सद्यः तु धनं मम समीपे नास्ति। यदा धनं प्राप्यते तदा अहम् एव आगत्य भवतः ऋणं



प्रत्यर्पयिष्यामि" इति उक्तवान्।

पुनः मासद्वयम् अतीतम्। ऋणं तु न प्रत्यागतम्। मार्गे चारुकीर्तिः यदि चन्द्रशेखरं पश्यति तर्हि अपश्यन् इव अग्रे गच्छति स्म। वार्तालापं कमपि न करोति स्म।

ततः कदाचित् चन्द्रशेखरः शिवाचार्यस्य समीपं गत्वा चारुकीर्तेः व्यवहारं समग्रं निवेद्य— "भवतः वचनस्य कारणात् एतत् सर्वं संवृत्तम्। भवतः वचने विश्वासः प्रदर्शितः यत् तस्य फलम् एतत्" इति खेदेन उक्तवान्।

"मम वचने विश्वासः यः कृतः तस्य फलम् इति? मया किं वा उक्तम्?" इति पृष्टवान् शिवाचार्यः।

"चारुकीर्तिः विश्वासार्हः न इति मारहरः यत् उक्तवान् तत् भवन्तं निवेद्य यदा अहं भवतः अभिप्रायं पृष्टवान् तदा भवान् उक्तवान् यत् परवचने विश्वासः न उचितः इति। एतेन सिद्धं खलु चारुकीर्तिः विश्वासार्हः इति भवतः आशयः इति? अतः अहं चारुकीर्तये ऋणं दत्तवान्। स तु ऋणप्रत्यर्पणं सर्वथा विस्मृतवान् अस्ति। अहं तु सर्वथा वञ्चितः अभवम्" इति उक्तवान् चन्द्रशेखरः।

तदा शिवाचार्यः मन्दहासं प्रकटयन्— "मया तस्मिन् दिने सूत्रप्रायत्वेन यत् उक्तं तत् सम्यक् न अवगतं भवता। 'अन्यस्य वचने विश्वस्य कस्यापि विषये विश्वासः अविश्वासः वा न करणीयः। स्वयं परीक्ष्य पात्रापात्रतां विचार्य निर्णयः करणीयः' इति मम आशयः आसीत्। चारुकीर्तिः विश्वासार्हः इति मम वचनस्य तात्पर्यं न आसीत्। व्यक्तिविशेषम् अनुद्दिश्य सामान्यतः यत् उक्तं तस्य अर्थः अन्यथा गृहीतः भवता" इति उक्तवान्।

अर्चकस्य वचनस्य आन्तर्यं ज्ञातं चन्द्रशेखरेण। सः अर्चकस्य अनुज्ञां प्राप्य— 'चारुकीर्तितः केन उपायेन ऋणं प्रतिप्राप्तव्यम्?' इति चिन्तयन् स्वगृहं गतवान्।






रावणः लङ्कायज्ञं कुर्वन् अस्ति इति ज्ञातवान् विभीषणः। अतः सः राम-लक्ष्मणयोः वानराणां च पुरतः एवम् उक्तवान्– "यदि रावणेन क्रियमाणः लङ्कायागः निर्विघ्नं परिसमाप्तः भवेत् तर्हि ततः लोहकवचधारिणः योद्धारः चतुरङ्गबलं च उत्पन्नं भवेत्। तदा रावणं पराजेतुम् अशक्यम् अपि स्यात् कदाचित्। अतः अस्माभिः सर्वैः गत्वा रावणस्य यागे विघ्नः उत्पादनीयः" इति।

'यागे विघ्नः कथम् उत्पादनीयः?' इति समस्या यदा उद्भूता तदा जाम्बवान् उक्तवान्– "अङ्गदः अदृश्यकारिणीं विद्यां जानाति। तस्याः साहाय्येन रावणस्य यागे विघ्नः उत्पादयितुं शक्येत" इति।

एषः एव क्रमः योग्यः इति सर्वे निर्णीतवन्तः। ततः अङ्गदः अदृश्यकारिण्याः विद्यायाः साहाय्येन अदृश्यतां प्राप्य रावणस्य अन्तःपुरं प्रविष्टवान्। मन्दोदरीं केशैः गृहीत्वा आकृष्य रावणस्य यागस्य स्थलं नीतवान्। एतत् दृष्ट्वा अपि रावणः यागस्थलतः न उत्थितवान्। तदा अङ्गदः ताम् आकृष्य अन्यत्र नेतुम् उद्युक्तः अभवत्।

"त्रिलोकीम् अपि जितवतः पत्न्याः रक्षकः अद्य कोऽपि नास्ति वा? हा हन्त! अहो, दुर्विधिः" इति रुदती आर्तनादं कृतवती मन्दोदरी। एतत् ज्ञात्वा मौनं स्थातुम्



अशक्नुवन् रावणः यागदीक्षां परित्यज्य उत्थितवान्। यागदीक्षायां विघ्नः कृतः इति तृप्तिं प्राप्य अङ्गदः मन्दोदरीं तत्रैव परित्यज्य अदृश्यरूपतां प्राप्य ततः निर्गतवान्।

"इदानीं वा रामेण सह सन्धिप्रस्तावः वरम्" इति पतिं सूचितवती मन्दोदरी।

"युद्धे मम बहवः बन्धवः मृताः। अनुजः प्रियपुत्राः च मृताः। बहवः वीराधिवीराः सेनाधिपतयः अपि मृताः। एतस्मिन् सन्दर्भे किम् अहं क्षुद्रः इव शरणं प्रार्थयेयम्? आत्मीयान् बलिरूपेण समर्प्य इदानीं शत्रोः कृपार्थं किं दैन्यं प्रदर्शयेयम्? कदापि न। रामः मां मारयेत् इति भीत्या भवती एवं सूचयन्ती अस्ति खलु? रावणः रामेण संहृतः इति अपख्यातिः लोके कदापि न श्रूयेत। यदि अनिवार्यं स्यात् तर्हि प्रयोपवेशव्रतेन योगमार्गम् आश्रित्य कपालविच्छेदं प्राप्य वा प्राणान् त्यजेयं, किन्तु रामस्य बाणानां संहारस्य विषयः तु न भवेयम्। 'रावणं मारयित्वा भवन्तं सिंहासने उपवेशयिष्यामि' इति विभीषणाय वचनं दत्तवान् अस्ति रामः। तत् मिथ्यावचनं करिष्यामि। मम मारणस्य अनन्तरं सीतां नेष्यामि इत्यपि तेन प्रतिज्ञा कृता अस्ति। मम मारणार्थम् अवकाशः एव तेन यथा न प्राप्येत तथा करोमि चेत् तस्य प्रतिज्ञायाः भङ्गः स्वयं भविष्यति। यदि अहं मृतः भवेयं तर्हि भवती चितारोहणं करिष्यति खलु? तत्समये तस्यां चितायां सीताम् अपि बलात् पातयतु। सीतावियोगात् रामः अपि मरणं प्राप्नोतु नाम" इति उक्त्वा रावणः पश्चिमदिशि निर्गतवान्।

लङ्कायाम् एषा घटना यदा प्रवृत्ता तदा लङ्कातः सहस्रयोजनदूरे पाताललङ्कायाम् अपरा घटना प्रवर्तमाना आसीत्। पाताललङ्कां महिरावणः पालयन् आसीत्। सः मन्त्रशक्तिं जानाति। मायाविद्यायां निपुणः सः। तस्य अग्रजः अहिरावणः। उभौ अपि रावणस्य बान्धवौ एव। 'यदा कष्टम् आपतति तदा स्मृतं चेत् आवाम् उपस्थितौ भवावः' इति तौ रावणं सूचितवन्तौ आस्ताम्।

महिरावणः वासुकेः पुत्रीं चन्द्रसेनां

स्वमायाशक्त्या अपहृत्य 'मां परिणयतु' इति तां वदन् बलात्कारं कुर्वन् आसीत्। अपूर्वसुन्दरी सा महिरावणम् उक्तवती आसीत् यत् अहं रामं मनसा वृतवती अस्मि, अतः रामः एव मम पतिः इति। सीतास्वयंवरस्य सन्दर्भे सा नागैः सह गत्वा लोकाभिरामं श्रीरामं दृष्टवती आसीत्। ततः आरभ्य सा रामं मनसा ध्यायन्ती रामविग्रहं सदा पूजयन्ती च आसीत्।

लङ्कायां रावणः पश्चिमतीरं गत्वा भूमौ दर्भान् प्रसार्य तदुपरि शयनं कुर्वन् प्रायोपवेशव्रतार्थं सन्नाहं कुर्वन् आसीत्।

तत्समये तत्र उपस्थितः नारदः– "अये राक्षसेन्द्र! किम् एतत्? असहायः इव व्यवहरन् अस्ति खलु भवान्? सोदरसदृशं महिरावणं विस्मृतवान् वा भवान्? सः भवतः आत्मीयं मित्रं न वा? तस्मिन् स्थिते किमर्थं चिन्ता भवतः? भवतः एतादृशं कृत्यं सर्वथा अनुचितम्" इति उक्त्वा ततः निर्गतवान्।

नारदस्य वचनं श्रुतवता रावणेन नूतनः उत्साहः प्राप्तः। सः झटिति उत्थाय नेत्रे निमील्य महिरावणं स्मृतवान्।

तस्मिन् एव समये महिरावणः चन्द्रसेनायाः समीपं गत्वा तया आराध्यमानं रामविग्रहम् आकृष्य– "तं रामम् अद्यैव आनीय भवत्याः पुरतः एव कालिकामात्रे बलिरूपेण अर्पयिष्यामि" इति उक्तवान्।

"रामस्य मारणं भवता कथं शक्येत? सः



रामः एव भवन्तं मारयिष्यति" इति उक्तवती चन्द्रसेना।

"मम मारणं तावत् सुकरम् इति चिन्तितवती वा भवती? इतः सहस्रयोजनदूरे घोरायां गुहायां रत्नखचितायां पेटिकायां पञ्चभ्रमराणां रूपेण मम पञ्च प्राणाः सन्ति। ते मारिताः चेदेव मम मारणं शक्यं, नान्यथा। तां गुहां घोराः पिशाचाः अहोरात्रं रक्षन्ति। गुहायां कस्यापि प्रवेशः सर्वथा दुस्साध्यः। अतः मम प्राणान् अपहर्तुम् एतस्मिन् लोके कोऽपि न शक्नोति" इति साभिमानम् उक्त्वा राममूर्तिं भूमौ क्षिप्तवान् महिरावणः। सा मूर्तिः शतशः छिन्ना। तान् खण्डान् पादेन मर्दयित्वा चूर्णीकृतवान् महिरावणः।



तस्मिन् एव क्षणे रावणेन सः स्मृतः आसीत्। एतत् जानन् सः भूमिं विभिद्य उपरि आगत्य रावणस्य पुरतः उपस्थितः अभवत्। उभौ अपि परस्परं गाढम् आलिङ्गितवन्तौ।

अनन्तरं रावणः महिरावणं स्वस्य कष्टं निवेद्य– 'रामलक्ष्मणौ योग्येन क्रमेण भवता दण्डनीयौ' इति सूचितवान्।

"मम प्रियम् एव कार्यं दत्तं भवता। श्वः प्रातः एव अहं तौ कालीमात्रे बलिरूपेण अर्पयिष्यामि। निश्चिन्तः भवतु भवान्" इति उक्तवान् महिरावणः।

रावणः सन्तोषं प्राप्य महिरावणं स्वभवनं नीत्वा आदरेण सत्कृतवान्।

गूढचराणां द्वारा एषा वार्ता अपि विभीषणेन ज्ञाता। तदा रात्रिसमयः आसीत्। रामलक्ष्मणौ शयनार्थं सन्नाहं कुर्वन्तौ आस्ताम्।

विभीषणः वानरप्रमुखाणां समीपं गत्वा महिरावणस्य योजनां निवेद्य– "सः रामलक्ष्मणौ अपहर्तुं यथा न शक्नुयात् तथा जागरूकतया रक्षणं करणीयम्" इति सूचयित्वा स्वस्थानं गतवान्।

हनूमान् झटिति स्वपुच्छं सुदीर्घं वर्धयित्वा रामलक्ष्मणौ परितः एकं दुर्गं निर्मितवान्। तस्य उपरि स्वयम् उपविश्य समीपे कोऽपि यथा न आगच्छेत् तथा जागरूकतया परिशीलयन् स्थितवान्।

पुनः अल्पे एव काले विभीषणः तत्र आगतवान्। सः हनूमतः स्वामिभक्तेः प्रशंसां कृत्वा– "अहम् एकवारम् अन्तः गत्वा रामलक्ष्मणयोः हस्ते रक्षां बद्ध्वा आगच्छामि। तदा कोऽपि मायया अपि तौ अपहर्तुं न शक्नोति" इति उक्तवान्।

तदा हनूमान् पुच्छबन्धं शिथिलीकृत्य विभीषणस्य अन्तः प्रवेशार्थम् अवकाशं कल्पितवान्। विभीषणः रामलक्ष्मणयोः समीपं गत्वा स्वस्य कार्यं समाप्य बहिः आगतवान्। "आञ्जनेय! सः महिरावणः मायाविद्यानिपुणः। सः मम रूपेण, अन्यस्य कस्यचित् रूपेण वा आगत्य वञ्चनां कर्तुम् अर्हति। अतः जागरूकतया तिष्ठतु भवान्" इति उक्त्वा ततः निर्गतवान्।

पुनः अल्पे एव काले विभीषणः तत्र आगतवान्। तदा हनूमान् झटिति उत्प्लुत्य विभीषणं कण्ठे गृहीत्वा– "अये महिरावण! मां वञ्चयितुम् आगतवान् वा? भवतः वञ्चना मम पुरतः न चलति" इति उक्त्वा मुष्ट्या प्रहृत्य भूमौ पातितवान्।



तदा विभीषणः हस्तेन तस्य प्रहारं निवारयन्– "आञ्जनेय! अनिष्टं प्रवृत्तम्। सर्वनाशः सम्पन्नः। या वञ्चना प्रचलेत् इति मया ऊहितम् आसीत् सा प्रवृत्ता एव। महिरावणः मम रूपेण आगतः आसीत् इति भाति। रामलक्ष्मणौ अन्तः सकुशलं स्तः वा न वा इति प्रथमं पश्यतु तावत्" इति उच्चस्वरेण उक्तवान्।

तदा दिग्भ्रान्तः हनूमान् पुच्छेण निर्मितस्य दुर्गस्य अन्तः दृष्टिं प्रसारितवान्। अन्तः रामलक्ष्मणौ न स्तः!

स्वस्य अविवेकं स्मरन् हनूमान् किं करणीयम् इति अजानन् इतस्ततः सञ्चारं कृतवान्। तदा तत्र जाम्बवान् आगत्य– "अये! आञ्जनेय! उत्तिष्ठतु। रामलक्ष्मणौ रक्षितुं भवान् एव समर्थः। त्वरया पातालं गच्छतु" इति उक्तवान्। विभीषणः पातालमार्गं निर्दिष्टवान्।

विभीषणरूपेण आगतः महिरावणः रामलक्ष्मणौ लघुप्रतिमारूपेण परिवर्त्य वस्त्रस्य अन्तः निगूह्य पाताललङ्कां नीतवान् आसीत्। तत्र गत्वा तौ चन्द्रसेनायै प्रदर्श्य– "अये, रामं तस्य अनुजं लक्ष्मणं च पश्यतु तावत्। श्वः एतौ कालिकादेव्यै बलिरूपेण समर्प्य भवतीं बलात् परिणेष्यामि" इति उक्त्वा विकटाट्टहासं कृत्वा रामलक्ष्मणौ बन्धने स्थापितवान्।

हनूमान् स्वशरीरं सम्यक् वर्धयित्वा आकाशमार्गम् आश्रितवान्। पातालप्रवेशार्थं कुत्र मार्गः स्यात् इति सर्वत्र अन्वेषणं कृतवान्।

पश्चिमसमुद्रस्य अन्तः यदा अन्वेषणं कृतं तदा पद्ममुकुलाकारकः एकः पर्वतः तेन दृष्टः। पर्वतशिखरे किञ्चन सूक्ष्मं बिलम् आसीत्। हनूमान् सूक्ष्मरूपं प्राप्य तत् बिलं प्रविश्य अग्रे गतवान्। एवं गमनेन तेन



पातालङ्कायाः मुखद्वारं प्राप्तम्।

तत् द्वारं कश्चन महाबलिष्ठः युवकः रक्षन् आसीत्। तस्य युवकस्य दर्शनात् एव हनूमति काचित् ममत्वभावना उत्पन्ना।

हनूमान् यद्यपि सूक्ष्मरूपेण आगतः अस्ति तथापि सः युवकः तस्य आगमनं ज्ञातवान् एव। "अये, कः भवान्? मां वञ्चयित्वा सिंहद्वारम् अतिक्रम्य गन्तव्यम् इति भवतः योजना वा? कदापि न शक्यते एतत्। भवतः मरणं सन्निहितं भावयतु" इति उक्त्वा मुष्ट्या प्रहर्तुम् उद्युक्तः सः।

तदा हनूमान् सूक्ष्मरूपं परित्यज्य वास्तविकं रूपं धृत्वा मुष्टियुद्धं कृतवान्। 'एषः मम बलेन समानेन बलेन युक्तः दृश्यते। एतस्य हननं करणीयं चेत् उपायः कोऽपि आश्रयणीयः। अन्यथा समयस्य बलस्य च हानिः इति आलोच्य हनूमान्' श्रान्तः इव भूमौ पतितवान्।

'शत्रुः पराजयं प्राप्य भूमौ पतितः' इति भावयम् सः युवकः अट्टहासध्वनिं कृत्वा– "अये मायाविन्! अहं कः इति अजानन भवान् मया सह युद्धार्थम् आगतः। अहं मत्स्यवल्लभः। वीराग्रेसरः वायुसुतः हनूमान् एव मम पिता। ज्ञातं खलु? इदानीं वदतु– भवान् किमर्थम् अत्र आगतः इति" इति क्रोधमिश्रितेन स्वरेण पृष्टवान्।

युवकस्य वचनं श्रुत्वा क्रुद्धः हनूमान् झटिति उत्थाय– "अये! मत्स्यज! हनूमान् ब्रह्मचारी इति लोकप्रसिद्धम्। एवं स्थिते सः भवतः पिता कथं भवेत्? मिथ्यावादी भवान्। अन्तिमक्षणः सन्निहितः भवतः" इति उक्त्वा मत्स्यवल्लभस्य उपरि आक्रमणं कृतवान्।

हनूमान् यदा मुष्ट्या प्रहृत्य मत्स्यवल्लभं मारयितुम् उद्युक्तः तदा कश्चन स्त्रीस्वरः श्रुतः– "आर्य! अलं साहसेन। अलं कलहेन। शान्तिः भवतु" इति।

हनूमान् परिवृत्य दृष्टवान्। तावता सौन्दर्यशालिनी विद्युत्कन्या इव काचित् धावन्ती तत्र आगतवती। सा समीपम् आगत्य आश्चर्यचकिततया पश्यतः हनूमतः पादौ दृढं गृहीत्वा– "आर्य! एतेन युवकेन यत् उक्तं तत् सत्यम् एव। एषः मम पुत्रः। अहं

मत्स्यकन्या। सुवर्चला इति मम नाम। दक्षिणसागरः मम पिता। अहं जलचराणां राज्ञी अस्मि। भवान् मां दृष्टवान् न स्यात्, किन्तु अहं भवन्तं सम्यक् जानामि। पूर्वं कदाचित् भवान् समुद्रलङ्घनं कुर्वन् आसीत्। तदा सिंहिका नाम छायाग्राहिणी राक्षसी छायाद्वारा भवन्तम् आकृष्टवती। भवान् तया सह युद्धं कृतवान्। तत्समये मत्स्यकन्या अहं समुद्रस्य उपरि सञ्चारं कुर्वती आसम्। भवान् सिंहिकां संहृत्य आकाशमार्गम् आश्रितवान्। तत्समये भवतः शरीरात् स्रुतं स्वेदबिन्दुम् अहं गीर्णवती। ततः गर्भवती अहम् एतं मत्स्यवल्लभं प्राप्तवती। अतः एषः भवतः पुत्रः एव" इति उक्तवती।

तावता आकाशतः दिव्या वाणी श्रुता– "आञ्जनेय! अहं सर्वत्रसञ्चारी सर्वसाक्षी वायुः भवता पिता। सुवर्चला यत् वदति तत् सत्यम्। मत्स्यवल्लभः भवतः एव पुत्रः" इति।

आश्चर्येण स्तब्धं हनूमन्तं पुनः उक्तवती मत्स्यकन्या सुवर्चला– "एषः यदा तरुणः जातः तदा महावीरः जातः। अतः महिरावणः एतं बलात् अत्र आनीय द्वारपालककार्ये नियुक्तवान् अस्ति। 'पुनः हनूमतः आगमनं यदा भविष्यति तदा एव एतस्य दास्यात् विमुक्तिः' इति वायोः अशरीरवाणी श्रुता आसीत्। अद्य भवान् उपस्थितः। सुदिनम् अद्य! एतस्य दास्यम् अपगतम्" इति।

"आं, सुवर्चलायाः वचनं सत्यम्" इति पुनः अवदत् दिव्यवाणी।

मत्स्यवल्लभः हनूमन्तं भक्त्या नमस्कृतवान्। हनूमान् तम् उत्थाप्य प्रीत्या दृढम् आलिङ्गितवान्।

सुवर्चला महता सन्तोषेण– "आर्य! भवान् चन्द्रसेनायाः समीपं गच्छतु। सा इदानीं कारागारे अस्ति। सा महिरावणस्य प्राणानां रहस्यं जानाति। सा सर्वविधैः अपि भवतः साहाय्यं करिष्यति" इति हनूमन्तम् उक्त्वा पुनरपि नमस्कृत्य मत्स्यवल्लभेन सह ततः निर्गतवती।





# पिशाचकथा

बगदादनगरे पूर्वम् अब्दुलः नाम कश्चन धनिकः आसीत्। पिशाचकथानां श्रवणे तस्य महती आसक्तिः। अतः सः नगरे घोषितवान् यत् यः उत्तमां पिशाचकथां श्रावयति तस्मै पारितोषिकं दीयते इति। पुरस्कार-प्राप्त्याशया बहवः पिशाचकथां श्रावयितुम् आगताः। किन्तु अब्दुलः कथानां मध्ये प्रश्नान् पृच्छन्, एषा कथा उत्तमा नास्ति इति वदन्, मध्ये मध्ये विघ्नम् उत्पादयति स्म। यदि कश्चित् एतेन व्यवहारेण खेदं प्राप्य निर्गन्तुम् उद्युक्तः भवेत् तर्हि अब्दुलः क्रुद्धः भवति। "एकाम् उत्तमां कथां श्रावयितुम् अपि अशक्नुवन् भवान् किमर्थं मम समीपम् आगतवान्? मूर्ख! योग्यः दण्डः प्राप्तव्यः एव भवता" इति उक्त्वा तं कशया ताडयित्वा प्रेषयति स्म।

एकदा मध्याह्नकाले कश्चन कृशकायः पुरुषः अब्दुलस्य समीपम् आगतवान्। तत्समये अब्दुलः षड्रसोपेतं भोजनं समाप्य उपधानम् आलम्ब्य तल्पस्य उपरि सुखेन उपविष्टवान् आसीत्।

अब्दुलः तं पृष्टवान्– "कः भवान्? पिशाचकथां श्रावयेत् वा भवान्?" इति।

"श्रीमन्! मम नाम हमीदः इति। पिशाचकथानिरूपणे अपूर्वं सामर्थ्यं मम। किम् इदानीं कथायाः आरम्भं करोमि?" इति पृष्टवान् हमीदः।

"अस्तु, आरम्भः भवतु। यदि भवतः कथा मह्यं रोचेत तर्हि भवतः दारिद्र्यं क्षणाभ्यन्तरे अपगतं स्यात्" इति उक्तवान् अब्दुलः।

"अस्तु, कथां शृणोतु तावत्। यथा भवतः तथा मम पत्न्याः अपि पिशाचकथाश्रवणे महती आसक्तिः आसीत्। किन्तु सा नितरां भीरुः आसीत्। कदाचित् मध्यरात्रे सा मां प्रार्थितवती यत् पिशाचकथा श्रावणीया इति। मध्यरात्रे पिशाचकथा मास्तु इति ताम् अहं

सूचितवान्। किन्तु सा 'कथा श्रावणीया एव' इति साग्रहम् उक्तवती। अहम् एकां घोरां पिशाचकथां श्रावितवान्। कथां श्रुत्वा नितरां भीता सा अधः पतिता, प्राणैः वियुक्ता अभवत् च'' इति उक्तवान् हमीदः।

''किम् एषा अपि काचित् कथा?'' इति कोपेन पृष्टवान् अब्दुलः।

''त्वरा मास्तु श्रीमन्! वास्तविकी कथा इतः परम् आरभ्यते। अनन्तरदिने प्रातः अहं पत्न्याः अन्त्यसंस्कारं समाप्य यदा गृहे स्वप्रकोष्ठे उपविष्टवान् आसं तदा अकस्मात् कश्चन प्रकाशपुञ्जः मम प्रकोष्ठं प्राविशत्। क्षणाभ्यन्तरे मम पुरतः काचित् पिशाची प्रत्यक्षा जाता। सा माम् उक्तवती– 'भवता निराक्रियमाणे अपि अहं भवत्तः बलात् पिशाचकथां श्रुतवती। तस्य फलम् इदानीम् अनुभवन्ती अस्मि। अहं भवत्तः दूरं गता। कृपया क्षन्तव्या अहम्' इति। एतस्याः घटनायाः आघाततः नितरां पीडितः अस्मि अहम्'' इति उक्तवान् हमीदः।

तदा अब्दुलः पृष्टवान्– ''अत्र आघातकरम् किम् अस्ति?'' इति।

''किं वदति श्रीमन्! दिनसमये पिशाचदर्शनं किम् आश्चर्यकरम् आघातकरं च न?'' इति पृष्टवान् हमीदः।

''स्यात् नाम तत् तादृशम्। किन्तु दिने पिशाचदर्शनं भवेत् इत्यत्र विश्वासः नास्ति मम'' इति उक्तवान् अब्दुलः।

''दिने पिशाचदर्शनं कुतो वा सम्भवेत्? अहम् एव आगतः अस्मि, तत्रापि दिने। मासात् पूर्वं कथां वक्तुम् आगतः अहं भवतः पीडां प्राप्य निर्गतः। सप्ताहं यावत् शय्याम् आश्रितः आसम्। अन्ते मम मरणं जातम्। ततः पिशाचरूपं प्राप्तं मया। मम वचने विश्वासः नास्ति वा भवतः? तर्हि पश्यतु तावत्'' इति उक्त्वा सः हमीदपिशाचः मुण्डं रुण्डात् पृथक्कृत्य कन्दुकम् इव अक्षिपत्।

एतत् दृष्टवतः भीतस्य अब्दुलस्य मुखात् चीत्कारः निर्गतः। ततः पुनः कदापि पिशाचकथाश्रवणे सः इच्छां न प्रदर्शितवान्।





# अमूल्यं धनम्

पार्वत्याः एकमात्रपुत्रः शिवकुमारः। पत्युः मरणस्य अनन्तरं सा विना लोपं पुत्रं पालयन्ती वर्धितवती आसीत्। सा इच्छति स्म यत् समीपबन्धोः पुत्री सुजाता स्नुषात्वेन आनेतव्या इति। किन्तु शिवकुमारः तस्मिन् एव ग्रामे निवसन्त्यां पद्मजायाम् अनुरक्तः आसीत्। पद्मजा धनिककुले जाता कन्या। सा कोमला सुन्दरी चापि आसीत्। कदाचित् पार्वती पद्मजायाः गृहं गत्वा उक्तवती– "अस्माकं तु धनिककुलं न। तथापि मम पुत्रः नितरां सज्जनः। 'मया यथा उच्यते तथा करोति सः' इति विचिन्त्य भवती तं स्वमोहजाले पातितवती अस्ति" इति।

"एवं न अम्ब! आवां परस्परानुरक्तौ स्वः। आवयोः अनुरागः दृढः अस्ति। आवयोः विवाहार्थम् अनुज्ञां दत्त्वा पूर्णेन मनसा आवाम् आशीर्वादेन अनुगृह्णातु कृपया" इति विनयेन उक्तवती पद्मजा।

"यदि भवती मम पुत्रं परिणेतुम् इच्छेत् तर्हि केचन नियमाः पालनीयाः भवत्या। मातृगृहतः एका वराटिका अपि न आनेतव्या। विवाहानन्तरं गृहकार्याणि सर्वाणि स्वयं करणीयानि। किम् एतत् अनुमतं भवत्या?" इति पृष्टवती पार्वती।

अङ्गीकारपूर्वकं शिरः चालितवती पद्मजा। ततः गृहं गता पार्वती पुत्रम् आहूय उक्तवती– "यदि सुजातां तिरस्कृत्य भवता पद्मजा परिणीयेत तर्हि अपवादवचनानि श्रोतव्यानि स्युः। धनप्राप्त्याशया भवान् पद्मजां परिणीतवान् इति वदेयुः जनाः। एतत् अहं न सहे" इति।

शिरश्चालनेन अनङ्गीकारं प्रदर्शयन् उक्तवान् शिवकुमारः– "अम्ब! अन्तरङ्गम् अनुरागस्य कारणम्। सुजातायाः निर्धनत्वं, पद्मजायाः धनिकत्वं वा मनसि न स्थापितं मया। यदि अहं पद्मजायाः ऋते अन्यां

"अनामिका"



परिणयेयं तर्हि मम जीवनं सारहीनं स्यात्'' इति।

तदा पार्वती उक्तवती– ''अस्तु तर्हि। पद्मजाम् एव परिणयतु भवान्। किन्तु यौतकरूपेण अपि तया गृहं प्रति किमपि न आनेतव्यम्। एतत् अनुमतं चेत् एषः विवाहः भवतु'' इति।

शिवकुमारः मातुः वचनम् अङ्गीकृतवान्। ततः अल्पे एव काले शिवकुमार-पद्मजयोः विवाहः प्रवृत्तः। पद्मजा शुभे मुहूर्ते पतिगृहं प्रविष्टवती। पार्वती पुत्रं स्नुषां च आहूय स्वकीयं नियमं पुनः स्मारितवती। तदा पद्मजा ताम् उक्तवती– ''अम्ब! अहं यद्यपि धनिककुले जाता तथापि सर्वाणि गृहकार्याणि जानामि। अतः गृहकार्याणि सर्वाणि अहं करोमि। किन्तु मम एकः स्वभावः यत् यदि कोऽपि कार्यं पश्येत् तर्हि अहम् अग्रे कार्यं कर्तुम् एव न शक्नोमि। अतः अहं द्वारं पिधाय पाकं पात्रक्षालनादिकं च करोमि। यदि भवत्याः पादमर्दनं करणीयं तर्हि तदपि रात्रौ दीपरहिते प्रकोष्ठे स्यात्'' इति। पार्वती एतत् अङ्गीकृतवती।

पद्मजा कार्याणि कथं करोति इति तु न ज्ञायते। किन्तु तस्याः आगमनस्य अनन्तरं गृहे पात्राणि शुभ्रतया शोभन्ते। गृहं सम्यक् अलङ्कृतं दृश्यते। पाकः तु नितरां रुचिकरः भवति। रात्रौ पद्मजा प्रीत्या श्वश्र्वाः पादमर्दनं करोति। पार्वती सुखेन निद्रां करोति स्म। एवं सर्वं तृप्तिकरम् अस्ति इत्यतः नितरां सन्तुष्टा अस्ति पार्वती।

एवम् एव कानिचन दिनानि अतीतानि। कदाचित् सुजातायाः पिता नारायणः गृहम् आगतवान्। सः पार्वतीम् उक्तवान्– ''मम पुत्र्याः निमित्तं वरः प्राप्तः'' इति।

एतत् श्रुत्वा महान्तं सन्तोषं प्रकटयन्ती पार्वती पृष्टवती– ''वरः कथम् अस्ति?'' इति।

तदा नारायणः उक्तवान्– ''बान्धवाः एव धनलोभेन अस्माकं सम्बन्धं यदि निराकुर्युः तर्हि उत्तमः वरः कथं प्राप्येत? तथापि चिन्ता तु नास्ति। प्राप्तः वरः अस्मत्स्तरानुगुणः अस्ति'' इति।

एतत् श्रुत्वा खिन्ना पार्वती नारायणम् उक्तवती यत् विवाहसमये स्नुषापुत्रयोः पुरतः के के नियमाः स्थापिताः इति। सर्वं श्रुत्वा नारायणः उक्तवान्– "अहं यदि वस्तुस्थितिं वदेयं तर्हि भवत्या कोपः न करणीयः। भवत्याः गृहस्य दर्शनात् एव ज्ञायते यत् गृहकार्याणि सर्वाणि सेवक-सेविकाद्वारा एव कार्यते इति" इति।

एतत् श्रुत्वा पार्वती आश्चर्यचकिता। अनन्तरदिने सा रहसि स्थित्वा सर्वं परिशीलितवती। तदा तया वस्तुस्थितिः ज्ञाता। पद्मजा गृहस्य द्वारस्य पिधानं कृत्वा पृष्ठतः स्थितात् द्वारात् कर्मकरीः अन्तः आह्वयति स्म। कर्मकरीषु काश्चन पात्रक्षालनं वस्त्रक्षालनम् इत्यादिकं कुर्वन्ति स्म। काचित् गृहस्य स्वच्छतां करोति स्म। अपरा पाकं करोति स्म। तत्समये पद्मजा सुखेन उपविश्य चित्राणि लिखति स्म।

एतत्सर्वं दृष्ट्वा पार्वती नितरां क्रुद्धा। पुत्रः यदा गृहं प्रत्यागतः तदा पुत्रं पुरतः उपवेश्य स्नुषां तत्र आहूय– आत्मना दृष्टं सर्वं सकोपम् उक्तवती। "किमर्थम् एवं कृतम्?" इति स्नुषां पृष्टवती च।

पद्मजा एतेन अल्पाम् अपि भीतिम् अप्राप्नुवती उक्तवती– "अम्ब! भवत्याः अल्पः अपि क्लेशः यथा न स्यात् तथा गृहकार्याणि प्रचलन्ति। एतावत्पर्यन्तं भवती गृहकार्यस्य विषये सन्तोषं प्रकटितवती



आसीत्। अन्यद्वारा कार्याणि अहं कारयामि चेत् भवत्याः कोपः किमर्थम्?" इति।

"एतावन्तः कर्मकराः गृहे कार्याणि कुर्वन्ति चेत् तेषां वेतनदानार्थं कुतः धनं प्राप्येत? मातृगृहात् किमपि न आनेतव्यम् इति अहं पूर्वम् एव सूचितवती आसं खलु?" इति कोपेन एव पृष्टवती पार्वती।

तदा पद्मजा उक्तवती– "अहं मातृगृहतः एकां वराटिकाम् अपि न आनीतवती। मया यानि चित्राणि विरच्यन्ते तेषां विक्रयणं कृत्वा भवत्याः पुत्रः धनम् आनयति" इति।

"प्रतिदिनं गृहे विशेषभोजनम् एव प्रचलति। एतदर्थं, कर्मकरेभ्यः दातुं च भवत्याः चित्राणां विक्रयणतः प्राप्तं धनं किं

पर्याप्तम्?" इति पृष्टवती पार्वती।

तदा शिवकुमारः उक्तवान्– "अम्ब! प्रायः तत् धनं तादृशानां निमित्तं पर्याप्तं स्यात्। एतदतिरिच्य अहम् अपि पूर्वापेक्षया अधिकं परिश्रमं कुर्वन् अधिकं धनं सम्पादयन् अस्मि। एवं ममापि आयः प्रवृद्धः अस्ति। अतः कर्मकरेभ्यः वेतनस्य दाने, भोजनार्थं व्ययीकरणे च न कोऽपि क्लेशः" इति।

तदा तत्रैव स्थितः नारायणः उक्तवान्– "इदानीं ज्ञातं खलु धनिककुले जातायाः स्नुषायाः स्वरूपम्? मम पुत्री सुजाता एवं चित्रं लेखितुं, धनं सम्पादयितुं वा न अशक्ष्यत्। पत्युः आयः यथा वर्धेत तथा परिश्रमार्थं प्रेरयितुम् अपि न अशक्ष्यत्। अतः एव भवती एतां स्नुषात्वेन आनीतवती। सर्वं जानामि अहम्" इति।

तदा पार्वती नारायणं पश्यन्ती उक्तवती– "भवता सत्यम् एव उक्तम्। मातृगृहात् किमपि न आनेतव्यम् इति मम नियमः आसीत्। तं नियमं पालयन्ती मम स्नुषा चित्राणि लिखन्ती धनं सम्पादयति। पतिम् अपि परिश्रमार्थं प्रेरयति। यदि आर्थिकम् आनुकूल्यं स्यात् तर्हि कर्मकराणां द्वारा कार्यकारणे अपि न कोऽपि दोषः। गृहस्य अपमाननं यथा न स्यात्, प्रत्युत सम्मानः एव यथा वर्धेत, तथा व्यवस्था भवति चेत् तत् मम प्रियम् एव। भवान् अपि स्वपुत्र्यै, सा स्वयं यथा धनं सम्पादयेत्, पतिं धनसम्पादने यथा प्रेरयेत् तथा प्रशिक्षणं ददातु" इति।

एतेन नारायणः मौनम् आश्रितवान्, ततः निर्गतवान् च। तदा शिवकुमारः पद्मजा च पार्वत्याः पादौ गृह्णन्तौ क्षमां प्रार्थितवन्तौ। तदा पार्वती– "वत्से! आयानुगुणं जीवनं स्यात्। अथवा जीवनानुगुणम् आयः वा स्यात्। द्वितीयः मार्गः आश्रितः भवत्याः। भवत्याः अन्तरङ्गं मया पूर्वम् एव यदि ज्ञातम् अभविष्यत् तर्हि अज्ञातरूपेण कर्मकराणां गमनागमनादिकं न अभविष्यत्। अस्तु तावत्, चिरं सुखेन जीवतां भवन्तौ" इति उक्त्वा आशिषा अनुगृहीतवती।





# र स वा र्ताः





## भवनवलनस्य कारणम्

इटलीदेशीयं पीसागोपुरं प्रपञ्चे अद्भुतविषयेषु अन्यतमं, यच्च द्रष्टुं प्रतिदिनं सहस्रशः जनाः तत्र गच्छन्ति। यदा एतत् निर्मितं (११७३ तमे वर्षे) तदा तस्य नगरस्य विशेषप्रसिद्धिः न आसीत्। अतः केचन भावयन्ति यत् जनानाम् आकर्षणार्थं तत्काले वलितं यथा दृश्येत तथ एव निर्मितम् आसीत् इति। किन्तु एषु दिनेषु वस्तुस्थितिः ज्ञाता अस्ति। एतस्य गोपुरस्य समीपे महान् गर्तः आसीत् इति श्रूयते। निर्माणात् दशभ्यः वर्षेभ्यः पूर्वं स च गर्तः मृत्तिकया पूरितः आसीत्। यदा तदुपरि भवनं निर्मितं तदा भारवशात् मृत्तिका अधः गता। एतस्य परिणामतः भवनम् अपि वलितम् इव स्थितम्। एतत् वलनं प्रतिवर्षं १ सें.मी. यावत् प्रचलति इति श्रूयते।

## शैशवे एव अपूर्वं भूगोलविषयकं ज्ञानम्

मद्रासनगरीया पञ्चवर्षीया श्रीविद्या प्रथमकक्ष्यायां पठति। तया स्वकक्ष्यायां भूगोलविषयः यद्यपि न पठ्यते, तथापि तस्मिन् विषये अपूर्वं ज्ञानं तस्याः। देशालेख्यपुस्तकम् (अट्लास्) उद्घाट्य सा विश्वस्य प्रमुखाणि राष्ट्राणि, राजधानीनगराणि, सागरान्, मरुभूमीः, नदीः, सरोवराणि च लीलया प्रदर्शयति। कस्य देशस्य राजधानी का इत्यपि सा विनाक्लेशं कथयति। यदा सा द्विवर्षीया आसीत् तदा मातुलस्य अङ्के उपविश्य देशालेख्यपुस्तकम् आसक्त्या पश्यति स्म। ततः तया अपारं भूगोलविषयकं ज्ञानं प्राप्तम्। एषु दिनेषु सा 'नेषनल् जियाग्रफिक् सोसैटी' नामिकायाः अमेरिकास्थायाः संस्थायाः बालसदस्या जाता अस्ति अपि।

## अपूर्वं परोपकारकार्यम्!

इंग्लेण्ड्देशीयः पादकन्दुकक्रीडापटुः पाल् एड्मण्ड्स् 'उत्तमः गोल् कीपर्' इति ख्यातिं गतः। २८ वर्षीयः एषः क्रीडापटुः गते अगस्ट्मासे ११ दिनाङ्के क्रीडां समाप्य गृहं प्रत्यागच्छन् आसीत्। तदा द्विवर्षीया काचित् बालिका १२ मीटर् (१४० द्वादशाङ्गुलानि) उन्नतात् वातायनात् लम्बमाना तेन दृष्टा। सः वायुवेगेन गत्वा पतन्तीं तां गृहीत्वा तस्याः प्राणान् रक्षितवान्। बालिकायाः नाम 'केली' इति। बालिकायाः माता कारेन् ग्राण्ट् पालवर्यस्य उपकारं कृतज्ञतापूर्वकं स्मरन्ती वदति– "सः युवकः अस्माकं दृष्ट्या कश्चन महावीरः!" इति।



# गार्दभज्योतिषम्

सदाधारानद्याः तटे स्थिते कस्मिंश्चित् ग्रामे सुप्रसिद्धः कश्चन ज्योतिषिकः आसीत्। परितः स्थितेषु सर्वेषु ग्रामेषु तस्य ख्यातिः प्रसृता आसीत्। तत्परिसरे तादृशः अन्यः समर्थः ज्योतिषिकः कोऽपि न आसीत्।

ज्योतिषिकस्य कीर्तिः राजधानीम् अपि गता। राजोद्योगिनः तं राजधानीं प्रति आहूतवन्तः। अल्पे एव काले तेन राजाश्रयः अपि प्राप्तः। तेन यत् भविष्यम् उच्यते तत् अवश्यं भवति स्म एव।

दिनेषु गच्छत्सु ज्योतिषिकः अधिकारिणाम् अनुग्रहतः प्रभूतं धनं सम्पादितवान्। स्वग्रामसमीपे नदीतीरे सुविशालां भूमिं क्रीतवान्। भूमौ कृषिः कारिता। सस्यकर्तनकाले सः ग्रामम् आगत्य स्थितवान्। सस्यानि कर्तितानि। शोषणस्य अनन्तरं तानि खलं प्रति नीतानि। सस्येभ्यः धान्यं पृथक्कृतम्। धान्यानि राशीकृतानि अपि।

गृहम् आगतः ज्योतिषिकः भोजनं समाप्य किञ्चित् निद्रां कृतवान्। ततः मन्दवायोः सेवनार्थं गृहस्य पुरतः उपविष्टवान् च।

तत्समये ग्रामस्य रजकः वस्त्रक्षालनं समाप्य क्षालितानि वस्त्राणि गर्दभस्य उपरि आरोप्य तेन गर्दभेन सह गृहं गच्छन् ज्योतिषिकं दृष्टवान्। सः गमनं स्थगयित्वा ज्योतिषिकम् उक्तवान्– "श्रीमन्! धान्यानि सर्वाणि खले एव सन्ति खलु? त्वरया गृहं प्रति तेषाम् आनयनम् वरम् इति भाति" इति।

"किमर्थं त्वरा? श्वः परश्वः वा कर्मकरद्वारा आनाययामि तावत्" इति उक्तवान् ज्योतिषिकः।

"श्रीमन्! अचिरात् एव धाराकारवृष्टिः आगच्छति। क्षणकालस्य विलम्बः अपि हानिं

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

कुर्यात्। अतः त्वरया कर्मकरान् आनाय्य यावच्छीघ्रं सर्वं धान्यं गृहं प्रति आनयतु" इति उक्तवान् रजकः।

तदा ज्योतिषिकः उच्चैः हसितवान्, उक्तवान् च– "अये! प्रसिद्धं ज्योतिषिकं माम् एव उपदिशति खलु? ह्यः एव मया नक्षत्राणां गतिः सम्यक् परिशीलिता। वृष्टिसम्भावना सर्वथा नास्ति सद्यः। आकाशं पश्यतु। निरभ्रः आकाशः! अल्पः अपि मेघः आकाशे कुत्रापि न दृश्यते। एवं स्थिते वृष्टिः कथम्? तत्रापि अल्पे एव काले! असम्भाव्यम् एतत्" इति।

"श्रीमन्! भवतः हितार्थं मया एतत् उक्तम्। ऋतुविषये, नक्षत्रगतिविषये ज्योतिषविषये वा अहं किमपि न जानामि। कासुचित् एव घण्टासु धाराकारवृष्टिः तु निश्चिता। शकटानि नीत्वा कर्मकरद्वारा त्वरया धान्यानाम् आनयनं वरम्। धान्यानि क्षेत्रे एव त्यक्तानि चेत् हानिः निश्चिता। सर्वनाशस्य अनन्तरं शोकः कृतः चेत् प्रयोजनं न स्यात् खलु?" इति उक्त्वा गर्दभं प्रेरयन् स्वगृहं गतवान् रजकः।

ज्योतिषिकः रजकस्य मूर्खतां स्मरन् हसन् गृहे सुखेन उपविष्टवान्। एकघण्टानन्तरं सः आकाशं दृष्टवान्। पश्चिमदिशि केचन मेघाः दृष्टाः। पुनः अल्पे एव काले गजाकारकाः कृष्णमेघाः आकाशे प्रसृताः। सूर्यः अदृश्यः जातः। सर्वत्र अन्धकारः प्रसृतः। महता वेगेन वायुसञ्चारः आरब्धः। आकाशे विद्युतः स्फुरिताः। मेघगर्जनं पुनः



पुनः श्रुतम्। धाराकारेण वृष्टिः आरब्धा।

किं करणीयम् इति अजानन् मौनम् उपविष्टवान् असहायः ज्योतिषिकः। यदा रजकेन वृष्टिसम्भावना सूचिता तदा एव किमपि कृतं यदि स्यात् तर्हि धान्यं रक्षितम् अभविष्यत्। शास्त्रदृष्ट्या तु तस्मिन् काले वृष्टेः सम्भावना न आसीत्। अतः ज्योतिषिकः रजकस्य वचनम् उपेक्षितवान् आसीत्।

'ज्योतिषिकेण मया अपि यत् ज्ञातुं न शक्तं तत् सामान्येन रजकेन कथं ज्ञातम्? विशिष्टं ज्ञानं स्यात् तस्य' इति आलोचितवान् ज्योतिषिकः।

यदा वृष्टिः स्थगिता तदा ज्योतिषिकः गृहात् निर्गत्य रजकस्य गृहं गतवान्। रजकं पृष्टवान् च– "मित्र! भवता यथा सूचितं तथैव प्रवृत्तम्। एतत् तु नितराम् आश्चर्यकरम्। भवान् ज्योतिश्शास्त्रं जानाति इत्यत्र सन्देहः एव न अवशिष्टः मम। भाविनीं घटनां भवान् केन आधारेण ज्ञातवान्? कस्मात् भवता ज्योतिश्शास्त्रम् अधीतम्?" इति।

तदा रजकः हसन् उक्तवान्– "मया यत् उक्तं तस्य बोधकः मम गर्दभः एव। गर्दभः भविष्यफलं यथा सूचयति तथा कोऽपि अन्यः सूचयितुं न शक्नोति। वृष्टेः काभ्यश्चित् घण्टाभ्यः पूर्वं गर्दभस्य रोमाणि उन्मुखानि तिष्ठन्ति। सः उत्कर्णः सन् नेत्रे सुविशालम् उन्मील्य आकाशं निर्निमेषं पश्यन् वृष्टिप्रतीक्षां करोति। ततः पुच्छम् उन्नीय रवं कुर्वन् इतस्ततः धावति। एषः व्यवहारः धाराकारवृष्टिं सूचयति। एवं वृष्टिविषये मम गुरुः गर्दभः एव। किन्तु गर्दभः वृष्टिज्ञानकौशलं कथं प्राप्तवान् इति तु न ज्ञायते" इति।

तदा ततः गच्छन् रजकम् उक्तवान् ज्योतिषिकः– "शास्त्रज्ञानं यावद् वा भवतु, तस्मात् अपि अतिरिक्तं किञ्चित् भवति एव। केचन प्राणिनः तादृशं कदाचित् जानन्ति। अहं ज्ञानी इति गर्वः अद्य मम अपगतः। भवता नितराम् उपकृतः अस्मि अहम्" इति।



प्रकृतेः वैचित्र्याणि



## मकराणां जीवनम्

मकराः यदा जलात् बहिः आगत्य सूर्यातपे शयानाः श्रान्तिपरिहारं कुर्वन्ति तदा ते अपायकारिणः न भवन्ति। तत्समये तेषां शरीरे स्थितान् कृमिकीटान् खादितुं लघुपक्षिणः तदुपरि आपतन्ति। यदा मकराः मुखम् उद्घाटयन्ति तदा केचन पक्षिणः तेषां मुखम् अपि प्रविश्य तत्रत्यान् मांसखण्डान् गृहीत्वा खादन्ति। किन्तु मकराः रात्रौ यदा जलस्य अन्तः भवन्ति तदा तेषां जीवनम् अन्यविधम् एव भवति। समीपे आगतान् मीनमण्डूकादीन् गृहीत्वा खादन्ति मकराः। जलसमीपम् आगतान् प्राणिनः गृहीत्वा अन्तः आकृष्य जले मज्जयन्ति ते। यदा ते प्राणिनः मृताः भवन्ति तदा तान् चूर्णीकृत्य खादन्ति ते। मकराणां दन्ताः न भवन्ति।



## उड्डयनारम्भे पृष्ठतः गमनम्

ग्वाटैमालादेशस्य राष्ट्रियः पक्षी 'क्वेजाल्' एषः अतिसुन्दरः पक्षी इति जगति ख्यातः अस्ति। एतस्य पक्षिणः शरीरस्य दैर्घ्यं ३५ सें.मी. स्यात्। किन्तु तस्य पुच्छस्य दैर्घ्यं तु ततोऽपि द्विगुणितं भवेत्। एतस्य पक्षिणः वैशिष्ट्यं यत् उड्डयनारम्भसमये एषः किञ्चित् पृष्ठतः आगत्य पुनः अग्रे गच्छति। शाखादीनां स्पर्शतः पुच्छस्य काऽपि हानिः न स्यात् इति उद्देशेन एषः एवं करोति। पक्षिणी वृक्षकोटरेषु अण्डानि प्रसूते। पक्षी स्वशरीरतापेन अण्डात् शावकम् उत्पादयति। तत्समये पक्षिणः पुच्छं बहिः दीर्घं प्रसारितं दृश्यते।

## प्रकाशमूलानि विविधानि

प्रकाशप्रसारकाः खद्योताः लोके प्रसिद्धाः। स्वजातीयान् अन्यान् कीटान् आक्रष्टुम् एते एवं प्रकाशं प्रसारयन्ति। जातिविशेषे जातानां मीनानां नेत्रभागतः अपि एवं प्रकाशः प्रसरति। नेत्रसमीपे स्थिताः जीवाणवः अत्र कारणम्। स च मीनः चर्मपटलस्य साहाय्येन तं प्रकाशम् अपाकर्तुम् अपि शक्नोति। ब्राजिल्देशीयाः आदिवासिनः रात्रौ सञ्चारसमये प्रकाशं प्राप्तुं विशिष्टस्य शिलीन्ध्रस्य उपयोगं कुर्वन्ति, येषां च अधोभागतः प्रकाशः निर्गच्छति।



# NOW, GIVE YOUR SON
# a life-like model
# of the world's finest gun



No more toys for your big little boy! Now, you can give him the real thrill of the world's greatest gun.

Tru-Gun. A true-to-life model of the UZI submachine gun developed by Mossad – Israel's elite commando unit.

The feel. The finish. The size. The shape. The sound. Tru-Gun is so much like the original, you can't tell the difference – till you pull the trigger.

- **squirts water in a powerful jet**
- **fires non-stop in a rapid burst**
- **unbreakable high-grade plastic**




- **no sharp edges, no metal pieces**
- **available in black, olive green, metallic silver**

New

# Tru-Gun

**U.Z.I. submachine gun**

*A life-like gun loaded with fun*



**Special Introductory Blast !**

Cut out this coupon and shoot over to your favourite toy store, to get 5% off on your TRU-GUN U.Z.I. submachine gun.

Name : ..........................................

Age : ............ Class: ............................

Address : ......................................

..................................................

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां मार्च्-९३ मासे प्रकटयिष्यामः।



M. Natarajan



M. Natarajan

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जनवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

## 'नवम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **सत्यां गवि समीपे, कुतो भयम्?**

द्वितीयचित्रम् - **सत्यां मातरि पार्श्वे, का चिन्ता?**

प्रेषकः - श्री उमाशङ्करपाण्डेय, प्रबन्धकः, द्वारकाशारदामठः, बि ४/४१ हनुमान्घाट्, वाराणसी-१


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ४८-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---